are not in a position definitely to ascribe a precise date to the Paramasaṁhitā, it is fairly clear that it is a very early handbook of a general character, and therefore of high authority to be quoted in discussions on the general character of the teaching of Pāñcharātra.

It will be seen from the above discussion that the Bhakti school of the Vaishṇavas goes back to great antiquity, and is a school of thought which exercised very considerable influence over other sects which had attained to historical fame, among them prominently Jainism and Buddhism. This position is certainly in keeping with what obtained in the Tamil country where, in the earliest extant Tamil literature, we find clear references not only to the worship of Krishṇa and Baladéva, but more or less to the general tenets of the *āgamāic* teaching, as in the Paripāḍal. A detailed analysis of the poems bearing on Vishṇu would indicate considerable affiliation to the Paramasamhita in respect of details, although it is possible, as we have stated already, that the detailed knowledge of the Pāñcharātra possessed by the Tamils may have been got from the Śānti-Parva of the Mahābhārata which had, in all probability been done into Tamil pretty early. The Aḷvārs whose time ranges from the 3rd to the 8th century have clear, and unmistakable and detailed references to the teaching of the Pāñcharātra as such, culminating in the specific statement of the Pāñcharātra having been taught through "Nara and Nāraṇa", and be of the character of a general way of life, Dharmaśāstra, as it is called in Sanskrit. It must have had a continuous history in the Tamil land already, enabling Rāmānuja to quote authoritative text books and among them Paramasaṁhitā for one, for refuting a contrary opinion. It is the teaching of these āgamas generally that contributed largely to widening the sphere of the Vedic religion, giving it a popular form, and making it much less technical than the ritualistic *Vaidik* teaching of the Brāhmaṇa literature. No extraneous influences or copying from outside is needed to explain this popular character, and there is hardly justification for regarding the Pāñcharātra in particular as non-Brahmanical teaching, sometimes even described as anti-Brahmanical. It is this particular way of popularising that has given to modern Vaishṇavism the wide scope and continuity of practice. This teaching that had received already form and shape got to be popularised by the writings of the Aḷvārs and more regularly formulated and incorporated in the Vaishṇava teaching by the work of Rāmānuja and carried to the north and spread out into the various regions of Northern

India, modifying itself to have effective appeal as in the introductory statement in the Padma Purāṇa and the general statement in the Śri Bhāgavata. It has thus become a living fountain from which all kinds of people could draw to quench their thirst for the consolations of religion, and prevails in one form or another across the whole width of the continent from the frontier hills to the Bay of Bengal, and from the Himalayas southwards throughout the whole country. In certain regions of this south, its popularity is shared by almost the kindred cult of the Śaiva āgamas, which certainly is no less a Bhakti cult than the Pāñcharātra.

श्री

# प्रस्तावना

श्रीमते लक्ष्मीहयवदनपरब्रह्मणे नमः।

भो भो आर्याः प्रज्ञासमुन्मिषितधिषणाः पण्डितप्रकाण्डाः वेदवेदाङ्गतत्त्वज्ञाः नैगमामोदमुदितहृदयाः श्रूयते चाद्यावधि आगमैकवेद्यो भगवान् लोकपावनः सर्वेश्वरः श्रियःपतिः परमात्मा जगदेककारणं मुख्यं तत्त्वमिति।

समुन्मिषति चास्माकं तत्र कापि महती जिज्ञासा कश्चायमागमः। सवैदिक उत अवैदिकः। किंमूलश्चायमागमः कति च भेदास्तस्य। के वा प्रवर्तयितारः इति च। आगमो नाम आङित्युपसर्गात् गम् धातोः अच्प्रत्यये निष्पन्नः तन्त्रशास्त्रस्वरूपार्थावबोधकः। तथा चोक्तम्—

आगतं पञ्चवक्त्रात्तु गतं च गिरिजानने।
मतं च वासुदेवस्य तस्मादागममुच्यते॥
सृष्टिश्च प्रलयश्चैव देवतानां तथार्चनम्।
साधनं चैव सर्वेषां पुरश्चरणमेव च॥
षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः।
सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदुर्बुधाः॥ इति।

किं च। आगमस्य पारम्पर्यक्रमागताचारानुव्यञ्जकत्वमवगम्यते महाभारते सहस्रनामाध्याये। यथा—

सर्वागमानामाचारः प्रथमं परिकल्प्यते।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः॥ इति॥

स चायमागमः नारदशाण्डिल्यमार्कण्डेयादिमहर्षिभ्यः श्वेतद्वीपवासिभिः सनकादिभिः श्रीमतो नारायणादवगत्य उपदिष्ट इति सुचिरं सुदृढं च बहुधा जोघुष्यते॥

हारीतश्च अस्यागमस्य परिदृश्यमानवेदचतुष्टयसमानाकारत्वं स्वीयधर्मशास्त्रे प्रकटयति। यथा—

अथातो धर्मं व्याख्यास्यामः । श्रुतिप्रमाणको धर्मः । श्रुतिश्च द्विविधा । वैदिकी तान्त्रिकी चेति ॥ इति सूत्रयन् हारीतः श्रुतेर्वैदिकतान्त्रिकत्वेन द्वैविध्यं वर्णयति । एतेन वेदतन्त्रयोः सोदरत्वं सुस्पष्टं भवति । अतः वेदे यादृशी प्रामाणिकी बुद्धिः तत्त्वविदां तादृश्येव तन्त्रेऽपीति निर्विवादमवगम्यते । अन्यच्च मनुस्मृतौ प्रथमाध्याये दशमश्लोकस्य व्याख्यानावसरे कुल्लूकभट्टः—

इदानीमागमप्रसिद्धं नारायणशब्दार्थनिर्वचनेन उक्तमेवार्थं द्रढयतीति अवतरणिकां कुर्वन् 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ इति पद्यं व्याकरोत् । एतेन च आगमस्य स्मृतेरपि प्रबलप्रमाणत्वमवगम्यते ॥

सचागमः एकायनवेदमूल इति परमं तत्र तत्र पञ्चरात्रग्रन्थेषु उद्घुष्यते । यथा ईश्वरसंहितायां—

पुरा तोताद्रिशिखरे शाण्डिल्योऽपि महामुनिः ।
समाहितमना भूत्वा तपस्तप्त्वा सुदारुणम् ॥
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ।
साक्षात् संकर्षणाल्लब्ध्वा वेदमेकायनाभिधम् ॥
सुमन्तुं जैमिनिं चैव भृगुं चैवोपगायनम् ।
मौञ्जायनं च तं वेदं सम्यगध्यापयत् पुरा ॥
एष एकायनो वेदः प्रख्यातः सर्वतो भुवि ।
दुर्विज्ञेयो दुष्करश्च प्रतिबुद्धैर्निषेव्यते ॥
श्रृणुध्वं मुनयः सर्वे वेदमेकायनाभिधम् ।
मोक्षायनाय वै पन्था एतदन्यो न विद्यते ।
तस्मादेकायनं नाम प्रवदन्ति मनीषिणः ॥ इति ।

एवमेव पारमेश्वरसंहितायां च प्रथमाध्याये—

शाण्डिल्यः—

यस्तु सर्वपरो धर्मो यस्मान्नास्ति महत्तरम् ।
वासुदेवैकनिष्ठस्तु देवतान्तरवर्जितः ॥

तज्जिज्ञासा भगवती तदा त्वाविरभून्मम ।
ततोऽत्र पर्वतश्रेष्ठे तपस्तप्तं मयोत्तमम् ॥
अनेकानि सहस्राणि वर्षाणां तपसोऽन्ततः ।
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ॥
साक्षात् सङ्कर्षणात् भक्तात् प्राप्त एष महत्तरः ।
एष एकायनो वेदः प्रख्यातः सात्वतो विधिः ॥
दुर्विज्ञेयो दुष्करश्च प्रतिबुद्धैर्निषेव्यते ।
मोक्षायनाय वै पन्था एतदन्यो न विद्यते ॥
तस्मादेकायनं नाम प्रवदन्ति मनीषिणः । इति ॥

तत्रैव अस्य वेदस्य मूलवेदत्वं प्रकृतिवेदत्वं च प्रतिपाद्यते । यथा—

मूलश्रुतिं यथावच्च ऋषयोऽध्यापितास्तु तैः ।
ततस्ते ऋषयस्त्वष्टौ लोकानां हितकाम्यया ।
श्लोकानां शतसाहस्रैः मूलवेदं निरीक्ष्य च ।
तथा दिव्यानि तन्त्राणि सात्वतादीनि चक्रिरे ।
अस्मात् शास्त्रं तु तन्त्राख्यमस्मान्मन्वादयोऽपि च ॥
धर्मशास्त्राण्यनेकानि करिष्यन्ति यथातथम् ।
अन्येषामपि शास्त्राणां योनिरेतद्भविष्यति ॥ इति ।
ऋगादिमन्त्रास्सर्वेऽपि तथा चास्मिन्प्रकीर्तिताः । इति ।
एष प्रकृतिवेदाख्यो वासुदेवैकगोचरः ।
प्रवर्तते कृतयुगे ततस्त्रेतायुगादिषु ।
विकारवेदास्सर्वत्र देवतान्तरगोचराः ।
महतो वेदवृक्षस्य मूलभूतो महानयम् ।
स्कन्धभूता ऋगाद्यास्ते शाखाभूतास्तथा मुने ।
जगन्मूलस्य देवस्य वासुदेवस्य मुख्यतः ।
प्रतिपादकतासिद्धा मूलवेदाख्यता द्विज ॥

इति च प्रतिपादनात् । अस्य एकायनवेदस्य सर्ववेदानां मूलत्वं जगत्कारणभूतस्य वासुदेवस्यैव मुख्यतया प्रतिपादनात् प्रकृतिवेदत्वमिति च सुस्पष्टमवगम्यते ॥

किं च छान्दोग्योपनिषदि भूमविद्यायां-ऋग्वेदं—भगवोऽध्येमि यजुर्वेदं सामवेद-मथार्वणं वाकोवाक्यमेकायनं चेति । तत्र एकायनशब्दः एकायनवेदबोधक एव ।

तस्य एकायनशब्दस्यार्थः पुरुषसूक्ते प्रस्फुरति । 'नान्यः पन्था अयनाय विद्यते' इत्यत्र अन्यशब्दस्य मुख्यार्थवाचकत्वात् 'एके मुख्यान्यकेवलाः' इति नैघण्टुकवचनेन एकमुख्यान्यानां समानार्थकत्वात् मोक्षाय मुख्यायनोपदेशको वेदः एकायन इति ।

अयं चैकायनो वेदः काश्मीरागमप्रामाण्यप्रणेत्रा भोजराजेन ततः पूर्वतनैर्भगवद्भिर्यामुनार्यवर्यैश्च स्वीयागमप्रामाण्यग्रन्थयोः प्रामाण्यपदवीमारूढ इति समर्थितः।

अतो नात्रास्माकमवकाशः ।

तथा च पाञ्चरात्रसंहितानां सर्वासां एकायनवेदमूलकत्वं भगवद्वासुदेवैकपरत्वात् भगवदाराधनाङ्गत्वं चावगम्यते । तस्मात् एकायनशाखामवलम्ब्यैव प्रादुरभूवन् पाञ्चरात्रिकाः इति तत्र तत्र महाभारते सुस्पष्टं भवति । त एव भागवता इति प्राक्तनाचार्यैः भगवद्यामुनमुनिप्रभृतिभिरभियुक्तैश्चान्यैः श्रीशंकराचार्यप्रभृतिभिः स्वीयस्वीयग्रन्थेषु विमृश्यन्ते ।

अस्य पाञ्चरात्रमतस्य भागवतमतमिति कथमिति चेत् भगवच्छब्दार्थभूतषाड्गुण्यपरिपूर्णभगवद्वासुदेवैकप्राधान्यप्रतिपादनात् ।

अत्र च पाञ्चरात्रशास्त्रे ये गर्भाधानादिदाहान्ताः संस्काराः प्रतिपाद्यन्ते ते च विभिन्नशाखाध्येतॄणां आपस्तम्बबोधायनगौतमादिप्रवर्तितसंस्कारसमानाकारतया प्रमाणत्वेनैवोपादेयाः । नोचेत् स्वगृह्योक्तानुष्ठातॄणां गृह्यान्तरोक्तानुष्ठातृत्वेन अब्राह्मण्यप्रसङ्गः प्रसज्येत । एतेषां एकायनश्रुतिमूलकत्वात् ।

किं च पाञ्चरात्रे ये वा विधीयन्ते भगवदाराधनोपयुक्ताः पञ्चसंस्कारादिदीक्षादयः संस्कारविशेषाः तेऽपि प्रकृतप्रसिद्धवेदाविरुद्धाः तत्प्रतिपाद्याश्च ।

तथा हि वेदे न कुत्रापि पाञ्चरात्रप्रतिपाद्यानां भगवदाराधनतदङ्गदीक्षादिसंस्काराणां प्रतिषेधः श्रूयते । प्रत्युत वेदोपब्रह्मणभूतस्मृत्यादौ पाञ्चरात्रोदितमन्त्रकलापस्यापि ग्रहणं परिदृश्यते । यथा—

अलाभे वेदमन्त्राणां पाञ्चरात्रोदितेन वा । इति ।

अनेन वेदापेक्षया पाञ्चरात्रस्य संपूर्ण क्रियाङ्गत्वं च व्यज्यते । वेदे यत्र कुत्रापि लक्षणया व्यञ्जनाया वा क्वचन पाञ्चरात्रोक्तसंस्कारविरुद्धत्वं प्रतिपाद-यितुं परैः आरभ्येत तदा तत्तत्प्रदेशे पूर्वापरपर्यालोचनया ऐककण्ठ्यमार्गेण समाधिः साधनीया ।

तेषां संस्कारविशेषाणां प्रकृतवेदप्रतिपाद्यत्वं च ऋग्वेदीयबाष्कलशाखायां

'प्र ते विष्णो अब्जचक्रे पवित्रे जन्माम्बोधिं तर्तवे चर्षणीन्द्राः ।

मूले बाह्वोः दधतेऽन्ये पुराणलिङ्गान्यङ्गे तावकान्यर्पयन्ति' ॥ इति ॥

यजुषि कठशाखायां–

'धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा

स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम्' । इति ॥

यजुषि बृहदारण्यके अथर्वणि सुदर्शनोपनिषदि च– 'निचिक्षेप सुषणं भूरि तेजः प्रधर्षति दिवानक्तं बिभृयुस्तज्जनासः' । इति ॥

ऋचि साम्नि च 'चमूषच्छ्येनः शकुनो बिभृत्वा गोविन्दुं द्रप्स-आयुधानि बिभ्रत् । अपाभूमिं सचमानः समुद्रं तुरीयं धाम महिषो विवर्ति' ॥ इति ॥

अथर्वणि–

एभिर्वयमुरुक्रमस्य चिह्नैरङ्कितो लोके सुभगा भवेम । तद्विष्णोः परमं ये गच्छन्तीह लाञ्छिताः' ॥ इति । एवं ऋग्वेदखिले–

'चक्रं बिभर्ति वपुषाभितप्तं बलं देवानाममृतस्य विष्णोः । स एति नाकं दुरिता विधूय प्रयान्ति यद्यतयो वीतरागाः' । इति । साम्नि च-

'पवित्रमित्यग्निः । अग्निर्वै सहस्रारः । सहस्रारो नेमिः । नेमिना तप्ततनुः ब्रह्मणः सायुज्यं सलोकतामाप्नोतीत्युपनिषत् ।' इति ।

यजुषि काठके- 'चरणं पवित्रमित्यारभ्य सुधितां दधात्वि'त्यन्तम् ॥ अपि च कल्पसूत्रकारेषु शाण्डिल्यः–

पशुपुत्रादिकं सर्वं गृहोपकरणानि च ।

अङ्कयेच्छङ्खचक्राभ्यां नाम कुर्याच्च वैष्णवम् ।

कारयित्वा सुवर्णेन पञ्चायुधगणं हरेः ।
बध्नीयात् कण्ठदेशे तु बालानां सूतिकागृहे ।
न मुद्रयेदासनानि शयनानि महीतले ।
स्थापयेत् क्षेत्रमध्ये तु शिलां चक्रादिमुद्रिताम् ।
मुक्तामणिसुवर्णाद्यैः कृत्वा चक्रादिभूषणम् ।
यथार्हं बिभृयुः सर्वे पुमांसः स्त्रीजनोऽपि वा ॥

साम्नि च ' अतप्ततनुः न तदाममश्नुते । ' इत्यादिभिर्बहुभिः प्रमाणवाक्यैः अन्यैरप्येवं प्रायैः पुराणेतिहासादिभिश्च पञ्चसंस्कारस्य प्रकृतवेदाविरुद्धत्वं सुष्ठु प्रतीयते ।

किं च । पाञ्चरात्रे योऽयं मुख्यतया प्रतीयमानोंऽशः भगवदर्चनारूपः सोऽपि वेदविहित एव ॥

यथा ऋग्वेदे–

' प्र वः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्चत । या सानुनि पर्वतानामदभ्या महस्तस्थतुरर्वतेव साधुना ॥ ' इति ॥

अस्याश्च ऋचः अयमर्थः । हे उपासकाः । वः युष्माकं अन्धसः अन्नं । पान्तं रक्षन्तं [ अर्चावतारं ] धिया स्वसङ्कल्पेन । आयते आगत्य प्राप्नुवते । मह महते । शूराय शौर्ययुक्ताय । विष्णवे सर्वव्यापकाय नारायणाय । [ तत्प्रसादनार्थमित्यर्थः ] प्रार्चत तुलसीपुष्पादीन् तत्पादारविन्दयोः समर्पयत । अदभ्याः परैरनभिभाव्या । महः महती या देवता । साधुना समीचीनेन । अर्वता इव अश्वेनेव । पर्वतानां सानुनि पर्वतसानुप्रदेशे । तस्थतुः तस्थौ ॥ अस्या ऋचः सायणः यद्यपि अर्थं अन्यथा वर्णयति तथापि तत्प्राक्तनैः शौनकादिभिर्महर्षिभिः इयं ऋक् भगवतः विष्णोराराधनायैवोपयुक्ता व्याख्याता च । यथा ॥

शौनकोऽहं प्रवक्ष्यामि नित्यं विष्णवर्चनं परम् ।
प्र वः पान्तमन्धसोधि इत्यभ्यर्चविधानतः ॥ इति

ये वा मन्त्रद्रष्टारो ऋषयः त एव जानन्ति मन्त्राणामभिप्रायं उपयोगं च । नेतरे केवलाग्रहभूमयः । किं च तत्रैव ( 1–155–2 ) सूक्ते–

'प्र ते विष्णो शूषमंतु मन्म गिरिक्षिते उरुगायाय विष्णवे ' । इति ।

( 1–155–4 ) प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । इति ऋचौ च बिम्बाराधनमेव प्रतिपादयतः । अन्यच्च ऋक् ( 10–155–1 ) ' अरायि काणे विकटे गिरिं गच्छ सदान्वे । शिरिं बिठस्य सत्वभिः तेभिष्ट्वा चातयामसि । ' इति श्रूयमाणो मन्त्रः भविष्योत्तरपुराणे श्रीवेंकटाद्रिमाहात्म्ये श्रीवेंकटनायकश्रीनिवासभगवद्विषयतया व्याख्यातः ।

श्रीमहाभारते आदिपर्वणि सप्ताशीत्यधिकशततमाध्याये सप्तविंशतितमः श्लोकश्च–

गिरिपृष्ठे तु सा तस्मिन् स्थिता त्वसितलोचना ।
बिभ्राजमाना शुशुभे प्रतिमेव हिरण्मयी ॥ इति ।

अयं च अमुमेवार्थं विशदयति ।

किं च । ऋक् (2–33–9) ' स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ' इति मन्त्रोऽपि विग्रहाराधनस्य प्रमाणम् ।

ऋक् (1–25–13) ' बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् । परि स्पशो निषेदिरे ' ॥ इति । इयमपि ऋक् देवतायाः विग्रहसत्तायां प्रमापिका ।

अपि च । ऋक् (10–155–3) ' अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम् । तदा रभस्व दुर्हणो तेन गच्छ परस्तरम् । इत्यस्या ऋचः सायणः । अदः समीपे वर्तमानं । यत् दारुमयं अपौरुषं देवताशरीरं सिन्धोः समुद्रस्य पारे प्लवते जलोपरि वर्तते इति व्याख्यायि । अतः इयमपि ऋक् विग्रहाराधने देवतायतने च सुदृढं प्रमाणं भवितुमर्हति ।

ऋक् संहितायां अष्टममण्डले ( 8–69–12 ) सुदेवो असि वरुण यस्य ते सप्त सिन्धवः । अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ।' इति आम्नायते । इदं च वचनं व्याकरणशास्त्रे पतञ्जलिना तद्यथा शोभनां ऊर्मिं सुषिरां अग्निः अन्तः प्रविश्य दहति इति व्याख्यातं यथा अग्निः तत्रत्यं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति तथाविभक्तयोऽपि शरीरं पापं अपाकुर्वन्तीत्यर्थः । सूर्मी इत्यस्य स्थूणायः प्रतिमेत्यर्थः । स्मर्यते च । ' सूर्मीं ज्वलन्तीमालिङ्गेन्मृत्यवे

गुरुतल्पगः' । इति । इयं च ऋक् प्रतिमायाः सत्ता वैदिकेऽपि काले आसीदिति निश्चेतुं दृढतरप्रमाणं भवितुमीष्टे ।

किं च । ऋक् ( 10-130-3 ) ' कासीत् प्रमा प्रतिमा किं निदानं आज्यं किमासीत् परिधिः क आसीत् छन्दः किमासीत् प्रउगं किमुक्थं यद्देवा देवमयजन्त विश्वे ' इयमपि ऋक् तत्र प्रमाणीभवितुमर्हति ।

यजुषि 'प्र तद्विष्णुस्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः ।' इति ।

तैत्तिरीयसंहितायां– 'यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः । पिशङ्गरूपः सुभरो वयोधाः । श्रुष्टी वीरो जायते देवकामः ' इति ।

पारमार्थिकोपनिषदि– ' रायां पतत्रे रयिमादधात्रे रायो बृहन्तं रयिमत्सुपुष्टाम् । रा राजिमन्तं रतये यजन्तु तं बिम्बवन्तं ककुदाय भद्रे ।' इत्याद्याः श्रुतयोऽपि प्रमाणतया अवगम्यन्ते ।

अथ चात्र या या ऋचः प्रमाणत्वेन प्रतिपादिताः । तासु कतिचन खिलभागे अन्तर्भूताः कतिचन अन्यत्रोपयुक्ताः तस्मान्न ताः प्रमाणत्वेनोपादेया इति केचन यद्यप्याचक्षीरन् तदा तत्सर्वमपि समाधितं भगवता यामुनमुनिना श्रीमता निगमान्तार्येण च स्वीयागमप्रामाण्यपाञ्चरात्ररक्षासच्चरित्ररक्षासु च । तस्मान्नास्माभिस्तत्र यत्नः कृतः । किं च–

तत्र पाञ्चरात्रसंहितासु 'वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रमधीतवान् ' इति वेदनिन्दा प्रतीयत इति कैश्चिदुच्येत तदसंगतम् । कुत इति चेत् वेदेषु बहवो विषयाः प्रतिपाद्यन्ते । एक एव विषयश्च बहुधा बहुत्र च उपवर्ण्यते । वेदस्य सागरतुल्यत्ववर्णनाच्च तत्र ज्ञातुमशक्यत्वावेदनं न तन्निन्दायां पर्यवस्येत् प्रत्युत तन्महिमाभ्यधिकवर्णन एव पर्यवस्येत् ।

अन्यच्च–

यथा वा छान्दोग्योपनिषदि भूमविद्याप्रकरणे ऋग्वेदं भगवोऽध्येयमित्यत्र तदितरसमस्तवेदाध्ययनादात्मवेदनालाभस्य उपवर्णनात् नहि वेदनिन्दा प्रतीयते ।

अपि च–

' चत्वार एकतो वेदाः भारतं चैकमेकतः ।
समागतैस्सुरर्षिभिस्तुलामारोपितं पुरा ॥

महत्वे च गुरुत्वे च भ्रियमाणे ततोऽधिकम् ।
महत्वाच्च गुरुत्वाच्च महाभारतमीरितम् ॥' इत्यत्र च—
यथा वा तथा अत्रापि समाधिः करणीया ।

पाञ्चरात्रं नाम—पञ्च रात्रीयन्ते यस्मिन् शास्त्रे तत् पाञ्चरात्रम्। यस्य देहिनः महाभूतगुणाः शब्दस्पर्शरूपरसगन्धात्मिकाः पञ्चसंख्याकाः रात्रीयन्ते इति वा पाञ्चरात्रम् । अथवा यस्य देहिनः यस्मिन् शास्त्रे रात्रयः सुखप्रदाः ज्ञायन्ते तत् पाञ्चरात्रम् । इति—

तथा च परमसंहितायां प्रथमाध्याये—

' महाभूतगुणाः पञ्च रात्रयो देहिनः स्मृताः ।
तद्योगात् विनिवृत्तेर्वा पञ्चरात्रमिति स्मृतम्' ॥ इति ।

तत्रैव ' भूतमात्राणि गर्वं च बुद्धिरव्यक्तमेव च ।
रात्रयः पुरुषस्योक्ताः पञ्चरात्रमिति स्मृतम्' ॥ इति च।

तथा विष्णुतन्त्रे--

'पाञ्चरात्रस्य शब्दस्य वक्ष्याम्यर्थमतः परम् ।
वियद्वायुश्च वह्निश्च आपश्चैव धरा तथा ॥
रात्रयो देहिनां प्रोक्ताः अविद्यासंभवाः स्मृताः ।
तद्योगाद्विनिवृत्तं तु कारयेयुर्यतस्ततः ॥
पाञ्चरात्रमिदं प्रोक्तं एतच्छास्त्रं मया तथा ।
अव्यक्तं च मनोबुद्धिरहंकारश्च चिन्तकम् ॥
भूतमात्रादिगन्धेषु रात्रयो देहिनः स्मृताः ।
एभिस्समन्वितैर्देहैर्देहिनां भुक्तिमुक्तिदम् ॥
साधनं पूजनं त्वेतत्पञ्चरात्रमिति स्मृतम् ।
देहभूतगुणाः पञ्च रात्रयो देहिनः स्मृताः ॥
तद्योगाद्विनिवृत्तं तु कारयेयुर्यतः स्मृतः ।
आवाहनासनाद्यैश्च तन्त्रोक्तैश्च यजन्ति माम् ॥

ताम्बूल्यादि चान्नाद्यैर्यत्र तन्त्रमितीरितम् ।
तन्त्रेण तेन मार्गेण यो मां नित्यं समर्चयेत् ॥
तं त्रायतीति संसारात् तन्त्रमित्यभिधीयते ।
ततो विपुलसंज्ञानं मत्प्रतिष्ठादिगोचरम् ॥
त्राणं च कुरुते यस्मात् तस्मात्तन्त्रमितीरितम् । ' इति ।

तथा च ईश्वरसंहितायां--

पञ्चायुधांशास्ते पञ्च शाण्डिल्यश्चौपगायनः ।
मौञ्जायः कौशिकश्च भारद्वाजश्च योगिनः ॥
ते मिलित्वा समालोच्य विष्णोराराधनेच्छया ।
अभिसंगम्य तोताद्रौ तपश्चक्रुस्सुदुस्तरम् ॥
तेषां तु तपसा तुष्टो वासुदेवो जगत्पतिः ।
× × × ॥
आद्यमेकायनं वेदं रहस्याम्नायसंज्ञितम् ।
दिव्यमन्त्रक्रियोपेतं मोक्षैकफललक्षणम् ॥
पञ्चापि पृथगेकैकं दिवारात्रं जगत्प्रभुः ।
अध्यापयामास यतः तदेतन्मुनिपुङ्गवान् ॥
शास्त्रं सर्वजनैर्लोके पञ्चरात्रमितीर्यते ॥ इति ॥

तस्मात् पाञ्चरात्रागमः वैदिकः एकायनशाखामूलकश्चेति सर्वसम्प्रतिपन्न-विषयत्वेन स्पष्टं प्रतीयते ॥ स च प्रथमतः सिद्धान्तपञ्चरात्रशब्दाभ्यां विभक्तः पश्चात्प्रत्येकं बहुधा भिन्नः प्रथते ।

तथाच पौष्करे-

एवं नानागमानां च सामान्यं विद्धि सर्वदा ।
नामद्वयं वा सिद्धान्तपञ्चरात्रेति पौष्कर ॥
एकैकं बहुभिर्भेदैरामूलादेव संस्थितम् ।
नानाशयवशेनैव सिद्धाद्यैः प्रकटीकृतम् ॥
संक्षिप्तं सप्रपञ्चं च तृतीयमुभयात्मकम् ।
सेतिहासपुराणैस्तु वेदवेदान्तसंयुतैः ॥

ये जन्मकोटिभिस्सिद्धाः तेषामन्तेऽत्र संस्थिताः । इति एतेन ' पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारयणः स्वयम् ' । इत्यत्र वक्ता इत्यस्य प्रवक्ता इत्युपवर्णनाच्च न कापि हानिः । तस्य च पाञ्चरात्रागमस्य अष्टोत्तरशतसंख्याकाः संहिताः अथवा अष्टोत्तरसहस्रसंख्याका वा संहिताः इति विज्ञायते ।

तथा च विष्णुतन्त्रे—

विष्णुः—अष्टोत्तरसहस्राणि अष्टोत्तरशतानि च ।
पञ्चरात्राणि तन्त्राणि सन्ति मे कमलोद्भव ॥
श्रुतिमूलानि तान्येव पञ्चरात्राणि पद्मज ।
वेदोक्तनामयुक्तानि मम प्रीतिकराणि च ॥
वेदाश्च पाञ्चरात्रं च सांख्ययोगं तथैव च ।
मयोदिताश्चतुर्वक्त्र भुक्तिमुक्तिप्रदानि च ॥
एतेषां पञ्चसंख्यानां वेदादीनां चतुर्मुख ।
तन्त्राणां पञ्चसंख्यानां नामानि च वदाम्यहम् ।
शतमष्टोत्तराणां च तन्त्राणामत्र पद्मज ।
नामधेयानि वक्ष्यामि श्रुणुष्वेकमनाधुना ।
विष्णुतन्त्रमिदं नाम परमं तदनन्तकम् ॥ इत्यारभ्य—
एतानि पञ्चरात्राणि नामानि कथितानि वै ।
शतमष्टोत्तराणां च तन्त्राणां च यथाक्रमम् ॥

इत्यनेन च ग्रन्थजातेन अष्टोत्तरशतसंख्याकानां पाञ्चरात्रतन्त्राणां नामानि श्रूयन्ते । तेषु अन्यतमा द्वितीयस्थानभाजी काचन परमसंहितेति प्रसिद्धा दृश्यते सा च परमसंहिता विष्णुतन्त्रे ब्रह्मोत्सवाध्याये—

मन्त्रसिद्धान्तमार्गेषु नवरत्नं प्रसिद्धकम् ।
एतदुक्तप्रकारेण वक्ष्यामि कमलासन ॥
पाद्मतन्त्रं तु प्रथमं द्वितीयं विष्णुतन्त्रकम् ।
कापिंजलं तृतीयं स्यात् चतुर्थं ब्रह्मसंहिता ।
मार्कण्डेयं पञ्चमं तु षष्ठं श्रीधरसंहिता ।

सप्तमं परमं तन्त्रं भारद्वाजं [ पराशरमथा ] तथाष्टमम् ॥
श्रेष्ठं नारायणं तन्त्रं नवरत्नमुदीरितम् ॥ इति ॥

नवरत्नेष्वन्यतमं स्थानमावहतीति प्रतीयते । किं च पाद्मे चापि इयं संहिता तन्त्रेषु पञ्चरत्नानीति प्रथितेषु तन्त्रेषु अन्यतमत्वेन गण्यते । यथा चर्यापादे त्रयस्त्रिंशे अध्याये–

पाद्मं सनत्कुमाराख्यं तथा परमसंहिता ।
पद्मोद्भवं च माहेन्द्रं कण्वतन्त्रामृतानि च ॥ इति ॥

अपि च इयं परमसंहिता भगवता श्रीभाष्यकारेण उत्पत्त्यसंभवाधिकरण-भाष्ये प्रमाणत्वेन परिगणिता च दृश्यते । किं च भगवता श्रीभाष्यकारेण कृतस्य नित्यग्रन्थस्य इयमेव संहितामूलभूतेति तद्व्याख्यातृभिरभ्युपगम्यते ।

अतश्च अस्याः संहितायाः प्रकाशने तत्रभवन्तः श्रीमन्तः शाक्कोट्टै एस् कृष्णस्वाम्यार्याः परं यत्नमावहन्तः श्रीमतो राजराजस्य बरोडासंस्थानाधिपस्य प्राच्यविद्याप्रकाशनालयाध्यक्षमुखेन सफलाः प्रकाशन्ते । तत्र च द्वे एव मातृके उपलब्धे । तयोरेका अडयार् मातृकालयस्था । अन्या मद्रपुरीराजकीयप्राच्य-ग्रन्थमातृकालयस्था । तयोरेव सहायेन इयं संहिता प्रकाश्यते ।

अस्याः संशोधने च किंचिज्ज्ञंमन्येन मया सह श्रीमन्तः डाक्टरबिरुद-भाजः दिवान् बहादूर् शाक्कोट्टै कृष्णमार्याः यथामति अयतन्त । तत्रत्यान् स्खालित्यादिदोषान् सर्वानपि तत्रभवन्तो विद्वदग्रेसराः सहृदयशिखामणयः क्षन्तुमर्हन्तु । इति शुभम् ।

सोढव्यं विबुधैरेतत् स्खालित्यं सर्वमादितः ।
किंचिज्ज्ञेन मयाऽज्ञानात् कृतं वैदग्ध्यमानिना ॥

इत्थम् शेट्लूर् राजगोपालार्यः
साहित्यशिरोमणिः ।

---

श्री

# परमसंहिताया विषयानुक्रमणिका

## प्रथमाध्याये

### प्रश्नप्रतिवचनाख्ये


1 मार्कण्डेयं प्रति देवलेन श्रेयोमार्गविषयकप्रश्ने कृते मार्कण्डेयेन स्वस्य भगवतः साक्षात्कारपूर्वकं भगवता स्वस्य श्वेतद्वीपगमनाभ्यनुज्ञानेन श्वेतद्वीपे सनकात् स्वस्य तन्त्रप्राप्तिकथनम्

2 मार्कण्डेयेन देवलं प्रति पञ्चरात्रस्योपदेशारंभः

3 तत्र सामान्येन सृष्टिक्रमप्रारंभः

4 क्षीरसागरे भगवता परमेण ब्रह्माणं प्रति मोक्षसंसारयोः कारणकथनम् ।

5 परमेण ब्रह्माणं प्रति संसारिणां विज्ञानोत्पत्तिमार्गकथनम्

6 देहिनां बन्धहेतुकथनप्रकारः

7 प्रकृतेः पुरुषस्य च संयोगे मायायाः कारणत्वकथनपूर्वकं भगवतः प्रसादस्य मायामोचकत्वेन संसारिणां भगवतः प्रसादप्राप्त्युपायकथनम्


## द्वितीयाध्याये

### सृष्टिक्रमाख्ये


1 ब्रह्माणं प्रति परमेण स्वप्रसादनोपायभूतस्वार्चनोपदेशः

2 सकलानां भावानां प्रकृतेः कारणत्वकथनपूर्वकं प्रकृतिपुरुषस्वरूप-संबन्धादिकथनम्

3 परस्य पुरुषस्य नियोगात् प्रकृतेः भुवनत्रयोत्पत्तिसंहारपूर्वकं सृष्टि-क्रमोपवर्णनम्

4 कालचक्रस्य सप्रकारं स्वरूपकथनम्

5 भगवतः द्वादशमूर्तीनां द्वादशशक्तीनां च स्वरूपकथनपूर्वकं मूर्तिपालानां द्वादशशक्तिप्रभत्वस्य द्वादशमासाधिपत्वस्य च कथनम्

6 भगवतः देवतादिविभागकथनप्रसंगे प्रधानत्वेन मूर्तित्रयकथनपूर्वकं विष्णोरेव वैशिष्ट्यकथनम्

7 सर्वेषां भगवद्वाचकानां नारायणादिशब्दानां व्युत्पत्तिकथनम्

8 भगवतः चतुर्व्यूहकथनपूर्वकं वेदानां आश्रमाणां वर्णानां च चतुर्धा-विभागकरणनिरूपणम्

9 भगवतः स्वरूपकथनम्

10 भगवतः प्राणिनः प्रति इच्छाद्वयस्य स्वरूपकथनपूर्वकं तत्प्रयोजन-कथनम्

**तृतीये विनयाख्ये ।**

1 परमेण फलकृतद्वैविध्यविशिष्टाया भगवत्पूजायास्सप्रकारोपदेशः

2 भगवत्पूजायाः पुनः गुणकृतत्रैविध्यकथनपुरस्सरं मानुष्यजातिविशिष्टानां सर्वेषामपि भगवत्पूजाकरणे वैष्णवत्वप्राप्तौ च आवश्यकत्व-कथनम्

3 पूज्यपूजकस्वरूपविवेचनम्

4 अर्चनांगभूतसमयविवरणपूर्वकं भागवतानां नित्यकर्मानुष्ठानविवरणम् ।

**चतुर्थे अर्चनाविधाने**

1 भगवतः आराधनस्य सप्तपञ्चोपदेशः

2 भक्तेः स्वरूपकथनपूर्वकं अष्टविधत्वकथनम्

3 अभ्युदयकामस्य अपरस्य विष्णोः पूजने विशेषतन्त्रकथनम्

**पञ्चमे द्रव्यविधाने**

1 संग्रहेण पूजाद्रव्याणां निरूपणम्

2 पूजोपकरणानां शुद्धिनिरूपणावसरे आत्मनः बाह्याभ्यन्तरशुद्धिनिरूपणम् ।

3 स्थानशुद्धिनिरूपणम्

4 पात्रशुद्धिनिरूपणम्

5 बेरशुद्धिनिरूपणम्

6 पूजोपयुक्तगन्धादिद्रव्योपयोगनिरूपणम्

7 भगवदाराधनानर्हद्रव्यनिरूपणपुरस्सरं भगवतो निवेदनानर्हद्रव्यनिरूपणम्

8 परिवारपूजनविधिनिरूपणम्

9 होमोपयुक्तसमिधां च निरूपणम्

**षष्ठे मन्त्रकोशे**

मन्त्राणां सप्रकारं प्रयोगविधिः

**सप्तमे चक्राख्ये**

1 वैष्णवयागाङ्गभूतदीक्षायाः सप्रपञ्चं निरूपणोपक्रमः तत्र, ब्राह्मणादि वर्णानुक्रमेण दीक्षांगयागभूमिनिरूपणप्रकारोपदेशः

2 दीक्षार्थिनां दीक्षाकाले अवस्थानप्रकारः

3 दीक्षायाः तिथिनिर्णयपूर्वकं आचार्यलक्षणवर्णनम्

4 चतुर्विधानामपि दीक्षानामधिकारिनिरूपणम्

5 दीक्षायां अनधिकारिणां निरूपणपुरस्सरं बुद्धिमतः पुरुषस्य मुख्याधिकारित्ववर्णनम्

6 दीक्षांगवेदिपरिकल्पनपूर्वकं चक्रपरिकल्पनप्रकारः

7 बहिरावरणे वेदिनिर्माणप्रकारः

8 चक्रस्य वर्णकैरालेखने बहिरावरणे वर्णविन्यासप्रकारः

9 चक्रमण्डले रजःपातनविधि

10 रजसां संपादनपुरस्सरं मण्डलविन्यासप्रकारः

11 ऐश्वरस्य चक्रस्य स्थापनप्रकारः

**अष्टमे दीक्षाविधाने**

1 दीक्षाया आवश्यकत्वकथनपुरस्सरं तस्यास्त्रैविध्येन विधाननिरूपणम्

**9 नवमे निमित्तज्ञानाख्ये**

निमित्तज्ञानपूर्वकं साधकस्य शुभाशुभविचारः

**10 दशमे योगाख्ये**

1 योगज्ञानस्य आवश्यकता

2 योगस्य द्वैविध्यकथनपुरस्सरं सप्रपञ्चं योगोपदेशः

**11 एकादशे अरिष्टाख्ये**

अरिष्टस्वरूपनिरूपण पूर्वकं तस्य विचारः ।

**12 द्वादशे धर्माख्ये**

वैष्णवानां धर्मस्वरूपनिरूपणपूर्वकं तदनुष्टानप्रकारः

13 त्रयोदशे काम्याख्ये

सविस्तरं काम्यानां स्वरूपनिरूपणपूर्वकं तत्साधनभूतयागनिरूपणम्

14 चतुर्दशे मुद्राख्ये

सप्रपञ्चं मुद्राविचारः

15 पञ्चदशे

त्रयोदशोक्तकाम्यसाधनकर्मणां सविस्तरोपन्यासः

16 षोडशे

काम्यफलप्राप्त्युपायभूतमन्त्राणां स्वरूपकथनपुरस्सरं तदनुष्ठानप्रकारोपन्यासः

17 सप्तदशे ईश्वराख्ये

राजादीनां प्रभूणां दीक्षाप्रकारोपवर्णनम् ।

18 अष्टादशे अधिवासनाख्ये

अकृतविद्यानां धनिनां नराणां देवदेवस्य स्थापनेन सिद्धिकथनपूर्वकं भगवतः स्थापनप्रक्रियायां अधिवासनान्तो भागः

19 एकोनविंशे स्थापनाख्ये

भगवतः स्थापनानर्हदेशकालद्रव्यादीनां कथनपुरस्सरं भगवतस्सपरिवारस्य स्थापनप्रकारोपन्यासः

20 विंशतितमे अग्निकार्याख्ये

अग्निकार्यविधिः

21 एकविंशे स्नपनाख्ये

स्थापनोत्तरं भगवतः कर्तव्यपूजाङ्गभूतस्नपनस्य साङ्गोपन्यासः

22 द्वाविंशे यात्राख्ये

स्थापनोत्तरं कर्तव्यायाः यात्रायाः सप्रकारोपन्यास

23 त्रयोविंशे बिम्बलक्षणाख्ये

बिम्बलक्षणकथन पूर्वकं होमसाधनभूतस्रुवादिलक्षणकथनम्

अयं च अध्यायः असंपूर्णः । किं च चत्वारिंशत्तमश्लोकादारभ्य उक्तो भागः प्रकृतानुपयुक्तः अन्यत्र कर्मशेषप्रकरणे द्रष्टव्य इव भाति

24 **चतुर्विंशे विद्वत्पूजाख्ये**

भगवत्पूजाप्रकारोपन्यासपूर्वकं विद्वत्पूजायाः विधानोपन्यासः
अयं चाध्यायः आरंभरहित इव प्रतिभाति

25 **पञ्चविंशे यात्राख्ये**

ज्ञानेन हीनानां भक्तानां श्रेयोमार्गप्राप्तेः साधनत्वेन भगवतः यात्रायाः प्रकारभेदकथनम ।।

26 **षड्विंशे लोकाख्ये**

संसारस्यास्य वृक्षरूपेण रूपणे अग्रमध्यमूलविभेदेन लोकानां स्थितिकथन-पुरस्सरं तत्र तत्र जीवानां स्थितिवर्णनेन तेषां परस्परवैशिष्ट्यच्य प्रकारोपन्यासः

27 **सप्तविंशे संग्रहाख्ये**

तत्र तत्रोपन्यस्तानां वैष्णवनित्यकर्मणां एकत्र समावेशेनोपदेशः

28 **अष्टाविंशे अनुग्रहाख्ये**

नित्यनैमित्तिकयोः सविभक्तयोः आपत्काले कर्तव्यप्रकारोपन्यासः;
अयं च अध्यायः तत्र तत्र त्रुटितत्वात् असंपूर्णः असंविज्ञातश्च

29 **एकोनत्रिंशे कर्मशेषाख्ये**

इतः पूर्वोक्तेभ्यः कर्मभ्यश्शिष्टानां कर्मणां सविस्तरोपन्यासः

30 **त्रिंशे रहस्याख्ये**

गुह्यतमस्य ज्ञानस्योपदेशः

31 **एकत्रिंशे उपसंहाराख्ये**

भगवता उपदिष्टस्य पञ्चरात्रस्य ब्रह्मणा श्वेतद्वीपवासिनां सनत्कुमारादीनां उपदेशः

सनत्कुमारादिभिः तद्द्वीपमागच्छतां सिद्धादीनां उपदेशकथनपुरस्सरं देवलं प्रति मार्कण्डेयेन स्वस्य तद्द्वीपे पञ्चरात्रप्राप्तिकथनम्

**शुभम् ॥**

# CONTENTS


| | Page |
|---|---|
| Preface ... ... ... ... | 5 |
| Introduction ... ... ... ... | 7 |
| प्रस्तावना ... ... ... ... | 29 |
| विषयानुक्रमणिका .. ... ... ... | 41 |
| परमसंहिता (Text) ... ... ... ... | 1–208 |
| ,, (English Translation) ... ... | 1–196 |
| श्लोकानां सूची ... ... ... ... | 197 |

# श्रीपाञ्चरात्रे परमसंहिता

आसीनमाश्रमे रम्ये नानाद्रुमविभूषिते ।
मार्कण्डेयं महाप्राज्ञं देवलस्समुपागमत् ॥ 1

तं प्रणम्य यथान्यायं तेन चाप्यभिनन्दितः ।
प्रष्टुं प्रचक्रमे विद्वान् परमज्ञानगोचरम् ॥ 2

अधीता भगवन् वेदाः साङ्गोपाङ्गास्सविस्तराः ।
श्रुतानि च मयाऽङ्गानि वाकोवाक्ययुतानि[1] च ॥ 3

न चैतेषु समस्तेषु संशयेन विना क्वचित् ।
श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति ॥ 4

आगमेषु न चैकस्मिन्[2] पश्यामि परमं हितम् ।
तेषामेव बहूनां तु संशयो मम वर्धते ॥ 5

तत्र मे भगवन् ब्रूहि संशयच्छेदकारणम् ।
त्वदन्यं न च पश्यामि श्रेयोमार्गविशारदम् ॥ 6

देवलेनैवमुक्तस्तु मार्कण्डेयो महातपाः ।
देवलं प्रत्युवाचेदं विस्मयेन समागतः ॥ 7

दीर्घमायुर्मया[3] लब्धं न च विप्रोषिता स्मृतिः[4] ।
प्रलया बहवो दृष्टाः सर्गा मन्वन्तराणि च ॥ 8

आचार्या बहवो दृष्टाः शास्त्राणि च सहस्रशः ।
नोपलब्धं मया तेषु किंचिदैकान्तिकं हितम् ॥ 9

ततोऽहं भृशनिर्विण्णस्सन्तप्तहृदयस्तदा ।
सालग्रामं समासाद्य विष्णुमेवाभ्यपूजयम्[5] ॥ 10

---

१. क, वाक्यावाक्य । २. क, नचैवास्मिन् । ३. क, मेहा । ४. क. स्मृतः । ५. क. पूजयेत् ।

समास्सहस्रमष्टौ च स्वयमागतनिर्णयः ।
श्रद्धाभक्तिसमेतेन विधिना येन केनचित् ॥ 11

ततस्स भगवान् देवः पुण्डरीकनिभेक्षणः ।
श्यामवर्णो मया दृष्टः प्रसन्नो भक्तवत्सलः ॥ 12

प्रणिपत्य मया स्तोत्रैः स्तूयमानः स देवराट् ।
सानुकम्पमिदं वाक्यमब्रवीन्मे तपोधन ॥ 13

भगवान्

मार्कण्डेय प्रसन्नोऽस्मि[1] विधिना विधिना कृतैः ।
आराधनैर्भक्तियुक्तैस्त्वया चिरतरं कृतैः ॥ 14

वरं वृणीष्व भद्रं ते यत्ते मनसि वर्तते ।
आयुर्विज्ञानमैश्वर्यं यचान्यत्तव सुव्रत ॥ 15

इत्युक्तोऽहं भगवता प्रत्यवोचं कृताञ्जलिः ।
ज्ञानं भवतु मे शुद्धं निस्संशयमनाकुलम् ॥ 16

इत्युक्तो देवदेवस्तु प्रहसन्निदमब्रवीत् ।
यदि ते सम्मतं ज्ञानं श्वेतद्वीपमितो व्रज ॥ 17

क्षीरसागरमध्यस्थं योगिनामेकमास्पदम् ।
तत्र सिद्धान् महाप्राज्ञान् उपास्य विधिपूर्वकम् ॥ 18

स्वर्गापवर्गविषयं साधय ज्ञानमीप्सितम् ।
अविच्छिन्ना च देशेषु गतिस्तव भविष्यति ॥ 19

आयुष्यं दीर्घकालं च मत्प्रसादेन सुव्रत ।
इत्युक्त्वा मामसौ देवः तत्रैवादर्शनं गतः ॥ 20

ततोऽहं विस्मितो भूत्वा श्वेतद्वीपाय देवल ।
प्रस्थितोऽस्मि चिरं कालं न क्वचित्प्रतिवारितः ॥ 21

१, ख. प्रपन्नोऽस्मि ।

शैलार्णवान् समुल्लङ्घ्य तद्वीपं पुनरासदम्[1] ।
तत्र तेजोमयाः सिद्धा निवसन्ति चतुर्भुजाः ॥ 22

शङ्खचक्रगदापद्मैरङ्किताः स्वेषु पाणिषु ।
पुरुषोत्तममेवैकं ध्यायन्तस्तत्परायणाः ॥ 23

एकान्तिनो मुदा युक्ता निर्द्वन्द्वा निष्परिग्रहाः ।
परिपक्वकषायाश्च सर्वदा ध्यानतत्पराः ॥ 24

तान् दृष्ट्वा विस्मयेनाहं प्रणिपत्य यथातथम् ।
आश्रमं सनकस्याथ सिद्धस्य समुपागमम् ॥ 25

तत्र तत्पूजयित्वाऽहमिदं वचनमब्रुवम् ।
द्वीपान्तरादुपावृत्तं मार्कण्डेयं प्रतीहि माम् ॥ 26

ज्ञानहेतोः प्रपन्नं त्वां शाधि मां ज्ञानपारग ! ।
एवमुक्तो मया विद्वान् सनकस्स महामनाः ॥ 27

वन्दमानः परं देवमेवमस्त्विति चाब्रवीत् ।
अथ तेन प्रसन्नेन[2] यत्तन्त्रं मम कीर्तितम् ॥ 28

तेन मे संशयाश्छिन्ना नष्टं च हृदये तमः ।
व्यवसायश्च मे धातः[3] (जातः?) प्रसन्ना चाभवन्मतिः ॥ 29

दीर्घचिन्ता प्रणष्टा च सर्वत्रोपरता स्पृहा ।
पूर्वे मन्वन्तरे लब्धं मया तन्त्रं च देवल ॥ 30

तावता चिरकालेन न कस्मैचिदुदाहृतम् ।
तन्त्रमेतदशेषेण ग्रन्थबाहुल्यकारणात् ॥ 31

एकदेशमुपाश्रित्य[4] बहवस्तापसा गताः ।
ततस्तु बहुधा भिन्नमिदं तन्त्रं जगत्यभूत् ॥ 32

अकृतार्थमसारं च विरुद्धं च परस्परम् ।
पञ्चरात्रमिदं प्रोक्तं योगतन्त्रमिदं परम् ॥ 33

---

१. क. रासदन् । २. क. प्रयत्नेन । ३. ख. दातः । ४. ख. श्रित्य ।

निर्मितं परमेणैव पुरुषेण तपोधन ।
सत्यार्थमपि(वि ?) संवादी(दि ?) लोकानां परमं हितम् ॥ 34

सम्मतं योगिनामेतत् वैष्णवानां विशेषतः ।
प्रमाणमिदमेवैकं आगमेषु व्यवस्थितम् ॥ 35

सर्गे सर्गेऽप्यविच्छिन्नं देवदेवस्य शासनात् ।
ये तु जानन्त्यशेषेण तन्त्रमेतन्मनीषिणः ॥ 36

न तेषां पुण्यमार्गेषु संशयो जायते क्वचित् ।
न तेषां विफलं जन्म न तेषामस्ति दुर्लभम् ॥ 37

न शोचन्ति न कुप्यन्ति नावसीदन्ति ते क्वचित् ।
कर्मणां फलसिद्धिश्च ज्ञानस्य च फलोदयः ॥ 38

उभयोस्सन्निपातश्च तन्त्रे[1]ऽस्मिन् परिकीर्तितः ।
महाभूतगुणाः पञ्च रात्रयो देहिनः स्मृताः ॥ 39

तद्योगाद्विनिवृत्तेर्वा पञ्चरात्रमिति स्मृतम् ।
भूतमात्राणि गर्वश्च बुद्धिर व्यक्तमेवच ॥ 40

रात्रयः पुरुषस्योक्ताः पञ्चरात्रं ततः स्मृतम् ।
यद्येतदखिलं तन्त्रं चा(सा?)वधानेन केनचित् ॥ 41

तस्य शास्त्रान्तराभ्यासे किंचिदेव प्रयोजनम् ।
यदि त्वमपि सन्देहं पुण्यमार्गसमाश्रयम् ॥ 42

हातु[2]मर्हस्यशेषेण तस्मात्तन्त्रमिदं शृणु ।
सर्वतः संशयस्थस्य तन्त्रमेतत्परं मतम् ॥ 43

त्वां च दृष्ट्वा तथाभूतं विस्मयो मे समुत्थितः ।
शृणु तस्मात् त्वमव्यग्रं पञ्चरात्रं मया श्रुतम् ॥ 44

देवदेवप्रसादेन सनकस्य मुखात्पुरा ।
अध्यायलक्षमेतत्तु सृष्टिसंहारसंयुतम् ॥ 45

१. क. तन्त्र । २. क. हेतु ।

आश्चर्यसिद्धिसंयुक्तं विचित्रैश्च क्रियाफलैः ।
नत्वेतदखिलं तन्त्रं श्रोतुं देवल शक्यते ॥ 46

दीर्घमायुरवाप्यैव मया तन्त्रमिदं श्रुतम् ।
मन्त्रसारमुपोद्धृत्य तव वक्ष्यामि देवल ॥ 47

उपोद्घातं पुरस्कृत्य वैकुण्ठचरिताश्रु(श्रि?)तम् ।
आसीदिदं तमोभूतं अप्रज्ञातमलक्षणम् ॥ 48

अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ।
तत्र योगमयीं निद्रां आस्थाय परमः पुमान् ॥ 49

दीर्घकाल;[लं?] स्वयंज्योतिः ततः स्रष्टुं मनो दधे ।
तत्र योगमयं रूपं अधिष्ठाय पुनः प्रभुः ॥ 50

लोकबीजं ससर्जाग्रे पुण्डरीकं सितप्रभम् ।
सहस्रदलपर्यस्तं अन्तःकेसरमण्डलम् ॥ 51

मध्यकर्णिकया युक्तं नाभीमण्डलसंभवम् ।
स्रष्टारमसृजत्तस्मिन् विधातारं चतुर्मुखम् ॥ 52

प्रभवं सर्वविद्यानां भावितात्मानमीश्वरम् ।
स सृष्ट्वा पञ्चभूतानि भुवनान्यसृजत्प्रभुः ॥ 53

भूतैर्व्यक्तैस्समस्तैश्च[1] स्थावराणि चराणि च ।
एवं सृष्ट्वा जगत्सर्वं महायोगी पितामहः ॥ 54

निश्चलं ध्यानमातिष्ठत्[न्?] संयान्त[यन्तु?]मुपचक्रमे ।
ततोऽस्य हृदये जाता विचिकित्सा समन्ततः ॥ 55

तया च विहिते ज्ञाने मनोमहिरवर्तत ।
अथापश्यत्परं देवं क्षीरसागरशायिनम् ॥ 56

---

१. ख. व्यक्ति ।

अनन्तभोगशय्यायां शयितं पङ्कजेक्षणम् ।
शङ्खचक्रगदापद्मान् धारयन्तं चतुर्भुजम् ॥ 57

श्रिया चरणयोर्जुष्टं श्यामलं पीतवाससम् ।
श्रीवत्साङ्कं प्रसन्नाभं कौस्तुभोज्ज्वलवक्षसम् ॥ 58

सेवितं वैनतेयेन संनिविष्टेन पार्श्वतः ।
तं दृष्ट्वा पुरुषश्रेष्ठं रस्य धारचपद्मयोः ॥ 59

मावया परमा........................ ।
न देशेन परमात्रा ब्रह्मभूत इति स्थितिः ॥ 60

जघन्यां तस्य मात्राशु स्थावरत्वमसत्समम् ।
संसारवासनाभीतं विमुक्तं कर्मबन्धनैः ॥ 61

आत्मतृप्तमुदासीनं निर्वाणमवगच्छति ।
एतद्ब्रूहि विभागेन परं कौतूहलं हि मे ॥ 62

परमः

ज्ञानं क्रियेति द्विविधं चेष्टितं सर्वदेहिनाम् ।
ज्ञानाधिक्याद्विमुक्तिः स्यात् ज्ञाना(कर्मा?)धिक्यात्तु संसृतिः ॥ 63

परिमाणान्वितं[1] कर्म परिमेयफलं मतम् ।
आत्यन्तिकफलं ज्ञानं परिमाणस्य[2] कामनात्[3] ॥ 64

ब्रह्मा

कथं संसारिणां पुंसामिन्द्रियश्रेयदर्शिनाम् ।
परिमाणाच्च[4] विज्ञानं योगिनामपि जायते ॥ 65

परमः(?)

नैव संसारिणां ज्ञानं विमुक्तौ वर्तते क्वचित् ।
बन्धच्छेदनिमित्तेषु तदुपायेषु वर्तते ॥ 66

१. and २. ख. परिणाम । ३. ख. वर्जनात् । ४. ख. परिणामाच्च ।

तच्छिन्नेषु निबद्धेषु कार्येषु करणेषु च ।
स्वयमेव परो ज्ञाता निष्पन्दमवतिष्ठति ॥ 67

ब्रह्मा[?]

केन धर्मेण भिद्यन्ते मुक्तास्तव शरीरिणः ।
एतदाचक्ष्व मे देव गुह्याद्गुह्यमिदं परम् ॥ 68

परमः

अहमेव भवन्त्येते न भेदस्तत्र कश्चन ।
यथाऽहं विहराम्येव तथा मुक्ताश्च देहिनः ॥ 69

ब्रह्मा

बन्धहेतून् समाचक्ष्व देहिनां पुरुषोत्तम ।
केन रूपेण बध्नन्ति पुरुषं बन्धहेतवः ॥ 70

परमः

त्रिभिरेव गुणैर्ब्रह्मन् समासव्यासवृत्तिभिः ।
त्रि द्विधा क्रियते निद्रा बध्यन्ते पुरुषास्तया[1] ॥ 71
सत्वा सुखमयी निद्रा रजसः कर्मसङ्कुलम् ।
तमसः सम्भृताकारा संबन्धस्त्रिविधः स्मृतः ॥ 72

ब्रह्मा

त्रिभिरेव गुणैर्योगः पुरुषस्यावतिष्ठते ।
कथं वा विप्रयोगः स्यात् मुक्तिकामस्य योगिनः ॥ 73

परमः

पुरुषस्य गुणा नैते त्रयोऽपि कमलासन ।
विषयस्य वशादेते भवन्ति न भवन्ति च ॥ 74

---

१. क. स्तथा ।

ब्रह्मा

कोऽसौ विषय इत्युक्तः पुरुषाणां सुरोत्तम ।
यस्य योगाद्भवन्त्येते न भवन्ति च ते गुणाः ॥ 75

परमः

प्रकृति स्त्रिगुणा ज्ञेया देहिनो विषयस्थिता ।
तया युक्तास्तु बध्यन्ते मुच्यन्ते रहितास्तया[1] ॥ 76
जानाति पुरुषो नित्यं त्रिगुणां प्रकृतिस्थिताम् ।
सा च प्रसूते सततं निद्रामस्य पृथग्विधाम् ॥ 77
कान्तामेव भजान्निद्रां स्वतन्त्रमिव संस्थिताम् ।
सुरुचं विस्मरत्येष संबन्धः पुंस इष्यते ॥ 78

ब्रह्मा

प्रकृत्या तस्य संयोगो जायते केन हेतुना ।
एतदाचक्ष्व मे देव गुह्यमेतत् परं मतम् ॥ 79

परमः

मायैव कारणं तस्य पुरस्ताद्विहिता मया ।
भूयः कर्मवशादेव मायामग्नेव तिष्ठति ॥ 80
मत्कृतायास्तु मायाया मत्प्रसादाद्विना क्वचित् ।
न विरामोस्ति लोकेऽस्मिन् नात्रकार्यो विचारणा ॥ 81
यावदेव न मायेयं मत्प्रसादेन हीयते ।
तावत् पुंसस्तु संसारो मुक्तिरस्य विपर्यये ॥ 82

ब्रह्मा

परिपूर्णस्य ते देव प्रसादः किंनिबन्धनः ।
न जाने कारणं तस्य तद्ब्रूहि पुरुषोत्तम ॥ 83

१. क. स्तथा ।

परमः

श्रद्धा भक्तिः समाधिश्च मयि प्रणिहिता जनैः ।
शुभमेव विविच्यन्ते तत्प्रसादमवैहि मे ॥ 84

शास्त्रागमविहीना च भक्तिर्मयि समर्पिता ।
शुभमेवावहेत्पुंसो मूर्खस्यापि न संशयः ॥ 85

तस्मात् संसारिणां पुंसां मत्प्रसादाद्विना क्वचित् ।
निःश्रेयसकरं नान्यत् दत्वे[दृन्वे]ष्टव्यं पितामह ॥ 86

इति श्रीपाञ्चरात्रे परमसंहितायां
प्रश्नप्रतिवचनं नाम
प्रथमोऽध्यायः

---

श्रीः

# अथ द्वितीयोऽध्यायः

ब्रह्मा

भगवन् देव देवेश पुण्डरीकनिभेक्षण ।
सर्वमेतद्गतं मन्ये त्वमेव जगतां पतिः ॥ 1

त्वामुपासितुमिच्छन्ति ये जना विधिपूर्वकम् ।
तेषामुपायमाचक्ष्वेत्येष्टेयुर्यत्र ते तदा ॥ 2

परमः

येषु भावेषु मे क्रीडा सर्गे संहार एवच ।
तान् भवानानुपूर्व्येण भक्तियुक्तस्सदा स्मर ॥ 3

प्रधानमूलमेतेषां प्रकृतिर्द्रव्यमेव च ।
अव्याकृतमविद्या च तदेव व्यक्तमुच्यते ॥ 4

अव्यक्तबुद्ध्यहंकारभूतमात्राश्च पञ्चच ।
इन्द्रियाणि दशैकं च महाभूतानि पञ्च च ॥ 5

स्थूलं सूक्ष्मं द्विधा क्षेत्रक्षेत्रज्ञश्च तथा परः ।
इति तत्त्वान्यशेषाणि कीर्तितानि तवानघ ॥ 6

त्रिभिरेव गुणैरेते प्रकृतिस्थैस्समन्विताः ।
सर्वे भावा भवन्त्येते श्रेष्ठा मध्यास्तथाऽधमाः ॥ 7

श्रेष्ठास्तु सत्त्वभूयिष्ठा मध्यमास्तु रजोमयाः ।
अधमास्तामसा ज्ञेयाः तेषां चर्यास्तु तादृशाः ॥ 8

तत्र सत्त्वमयैर्भावैरर्चना मत्प्रसादिनी ।
राजसैर्भोगासाङ्गः स्यात् तामसैर्मोहकारणम् ॥ 9

तस्मान्मां प्रत्युपासीनं [नः ?] सर्वभावाननुक्रमात् ।
कुर्वीत सात्त्विकेनैव नाशयित्वा रजस्तमः ॥ 10

प्रलयक्रममास्थाय कुर्यात्सर्वत्र नाशनम् ।
निसर्गक्रममास्थाय पुनरुत्पादनं स्मृतम् ॥ 11

तस्मिन्निसर्गे संहारे विज्ञेयौ मामुपाश्रुतौ ।
आनुपूर्व्येण भावानां नान्यथा सिद्धिरिष्यते ॥ 12

ब्रह्मा

कुतः प्रसूतिर्भावानां विनाशो वा क्व सम्मतः ।
किमन्त्यकालमुभयमेतद्भवतिचेद्वद ॥ 13

परमः

प्रसूते प्रकृतिर्भावान् प्रकृतिर्ग्रसते पुनः ।
ब्रह्मणः संभवे सृष्टिस्तदपाये तु विप्लवः ॥ 14

सहस्रयुगमानं तत् दिनं ब्राह्मं निशापि च ।
तेन मानेन तस्यापि शतं वर्षाणि जीवितम् ॥ 15

एवं ब्राह्मेण कालेन सर्गसंहार एव च ।
सततं परिवर्तेते मन्नियोगात्पितामह ॥ 16

ब्रह्मा

किं रूपं प्रकृतेस्तस्याः कथं सा च प्रसूयते ।
संबन्धः कीदृशस्तस्याः पुरुषस्य परस्य च ॥ 17

परमः

अचेतना परार्धा च नित्या सततविक्रिया ।
त्रिगुणा कर्मिणां क्षेत्रं प्रकृतेरूपमुच्यते ॥ 18

व्याप्तिरूपेण संबन्धः तस्याश्च पुरुषस्य च ।
सह्यनादिरनन्तश्च परमार्थेन तिष्ठति ॥ 19

यथाकाशमिदं सर्वं प्राप्य शब्दो व्यवस्थितः ।
तथैवाप्या [व्या?] कृतं प्राप्य परमात्मा व्यवस्थितः ॥ 20
यथा वा पयसि स्नेहः यथा च सलिले रसः ।
गमने तद्वदत्रापि व्याप्य व्यापकतेष्यते ॥ 21
तत्र यद्व्यापकं रूपं परस्स विषयी पुमान् ।
भवत्यव्याकृतं व्याप्य परस्य विषयोऽपरम् ॥ 22
यथा सतोऽसतो नान्याः शक्या दर्शयितुं पृथक् ।
तथा व्यापकता नान्या सर्वस्मात् व्याप्य तत्स्मृता ॥ 23
अचिद्व्याकृतं तत्र चिदस्मात्परमो मतः ।
उभयन्त्वेतदन्यं तदभिन्नमिव तिष्ठति ॥ 24

ब्रह्मा

कथमस्मादिदं सर्वं बभूव भुवनत्रयम् ।
कीदृशाः पुरुषाश्चैव संसारेऽस्मिन् व्यवस्थिताः ॥ 25

परमः

परस्य पुरुषस्यैव नियोगात्प्रकृतिस्सदा ।
उत्पादयति लोकांश्च संहरत्यपि चान्ततः ॥ 26
अचेतना तु प्रकृतिर्नान्यथा संप्रसूयते ।
तेनेमौ सर्गसंहारौ करोति पुरुषः परः ॥ 27
तत्र सृष्टिमिमां पूर्वं श्रुणु, ब्रह्मन् समाहितः ।
स्थितिं च प्रलयं चापि कथयिष्यामि ते पुनः ॥ 28
शक्तयः पञ्च विख्याताः परस्य परमात्मनः ।
याभिरेव परो[1] देवः परमव्योम्नि तिष्ठति ॥ 29

---
१ क. वरो.

परमेष्ठी पुमान् विश्वो निवृत्तिः सर्वसंज्ञितः ।
शक्तयः पञ्च तस्योक्ताः पञ्चोपनिषदाख्यया ॥ 30

पञ्चशक्तिमयो देवः परमात्मा जगत्प्रभुः ।
पञ्चेन्द्रियसमायोगः पञ्चधा ज्ञानमश्नुते ॥ 31

परमेष्ठी स्मृतश्शब्दे स्पर्शे तु पुरुषः स्मृतः ।
पञ्चा [विश्वा]त्मा तेजसि प्रोक्तो निवृत्ता[त्या]त्मा रसे स्मृतः ॥ 32

सर्वात्मा कथितो गन्धे विषयो[यी?] पुरुषः परः ।
पञ्चात्मानः स्मृताह्येते सूक्ष्मरूपा व्यवस्थिताः ॥ 33

संसारविषयातीता योगगम्याः सनातनाः ।
एतत्सूक्ष्मशरीरंतु कथितं मुक्तिकारणम् ॥ 34

तेन तु प्रकृतेर्योगात् ज्ञाताः पञ्चदश क्रमात् ।
पञ्च पञ्च समासेन शक्तयो गुणयोनयः ॥ 35

ज्येष्ठा विद्या च कान्तिश्च शान्तिः श्रद्धा च पञ्चमी ।
निर्मलाश्शक्तयः पञ्च जाताः सत्वस्य कारणम् ॥ 36

वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः सृष्टिश्च पञ्चमी ।
सा जान[सामला?] किंचिदेवैका[ता?] रजसः कारणं मतम् ॥ 37

मोहिनी प्रथमा चासामविद्याऽथ तमोवती ।
मृत्युर्माया च मलिना योनयस्तमसस्त्विमाः ॥ 38

तत्र प्रकाशकं सत्त्वं रजो विद्धि क्रियात्मकम् ।
तमस्त्वावरणं ज्ञेयमित्येतद्गुणलक्षणम् ॥ 39

एभिरेव गुणैरेतं जगत् स्थावरजङ्गमम् ।
वैचित्र्यं विविधं प्राप्तं संसर्गव्यतिरेकतः ॥ 40

---

१. क. श्वासा ।

बुद्धिरष्टविधा जाता गुणेभ्यस्त्रिगुणात्मिका ।
सत्त्वात्सुखात्मिका जाता रजसो दुःखसंयुता ॥ 41

तमसो मोहसंसृष्टा तत्र भेदानिमान् श्रुणु ।
सात्त्विकानि च चत्वारि रूपमेत(कं?)त्तु राजसम् ॥ 42

तामसानि पुनस्त्रीणि यानि वक्ष्यामि नामतः ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यमिति त(सा?)त्त्वतः ॥ 43

वैराग्ये विपरीतं तु रूपं राजसमिष्यते ।
धर्मादि विपरीतानि तामसानीति धारय ॥ 44

जातो बुद्धेरहंकारस्त्रिविधस्त्रिगुणात्मकः ।
येन जन्तुरनात्मानमात्मानमिति मन्यते ॥ 45

वैकारिकं सात्त्विकाख्यात् राजसात्तैजसः स्मृतः ।
भूतादिस्तामसाद्रूपादहंकारस्त्रिधा भवेत् ॥ 46

वैकारिकादहंकारात् पञ्च बुद्धीन्द्रियाणि तु ।
समुत्पन्नानि यैर्ज्ञानं पुरुषस्येह सिद्ध्यति ॥ 47

कर्मेन्द्रियाणि पञ्चैव कर्मारंभाणि तैजसात् ।
मनोजातद्विरूपंच ततस्सङ्कल्पसाधनम् ॥ 48

कालश्च तैजसादेव जातस्तु यदि[कृत?]लक्षणः ।
कालाद्दिशश्च संभूताः पूर्वाद्याः क्रमशः स्थिताः ॥ 49

भूतादेवं[व] च जातानि तन्मात्राणि यथाक्रमम् ।
प्रथमं शब्दतन्मात्रं द्वितीयं स्पर्शपूर्वकम् ॥ 50

रूपमात्रं तृतीयं तु रसमात्रं चतुर्थकम् ।
पञ्चमं गन्धमात्रं तु सूक्ष्मविग्रहसिद्धये ॥ 51

गन्धमात्रादिकाः पञ्च दिशः कालो मनस्तथा ।
अहंकारश्च बुद्धिश्च प्रकृतिर्योगविग्रहः ॥ 52

इत्येता द्वादश प्रोक्ता मूर्तयः परमात्मनः ।
वासुदेवमवस्थाप्य यजन्ते[1] सिद्धिमीप्सवः ॥ 53

तन्मात्रेभ्यस्तु भूतानि क्रमाद् ज्ञानानि[जानानि?] पञ्च वै ।
पं[खं?]च वायुश्च तेजश्च जलपृथ्वी च पञ्चमी ॥ 54

एभिः स्थूलशरीरं तु देहिनामुपजायते ।
श्रोत्रं च चक्षुषी [श्रोत्रत्वक्चक्षुषी?] जिह्वा प्रा[घ्रा]णं बुद्धीन्द्रियाणि च ॥ 55

कर्मेन्द्रियाणि वाक्यानि [वाक्पाणि?] गुह्यं पाय्वङ्ग्रयः स्मृताः ।
कार्यैश्च करणैश्चैव शरीरं स्थूलमुच्यते ॥ 56

एवं सृष्टिः शरीरान्ता सूक्ष्मस्थूलविभागशः ।
कीर्तिता ते मया ब्रह्मन् अथ वक्ष्यामि देहिनाम् ॥ 57

परस्य पुरुषस्यैव शक्तयः कोशशोऽपराः ।
जातिनामस्वरूपाणां भेदाद्भिन्ना इव स्थिताः ॥ 58

शरीरं भौतिकं प्राप्य कर्मभिः स्वैरुपार्जनैः [र्जितैः?] ।
दीर्घं भ्रमन्ति संसारे तेच संसारिणो जनाः ॥ 59

शुद्धेन कर्मणा यान्ति गतिमूर्ध्वमुखीं शुभाम् ।
अशुद्धेन कर्मणा यान्ति तथा गतिमधोमुखीम् ॥ 60

पुमांसोऽ[2]व्याकृते मग्नाश्चिद्रूपा अपि ते स्वतः ।
अशक्ताः स्वपरं ज्ञातुमाश्रयस्वा[3]न्तमोहिताः ॥ 61

रागद्वेषादयस्तेषां दोषाः प्रकृतिसंभवाः ।
संसारगोचरामे[ए?]व किं कुर्वन्ति देहिनाम् ॥ 62

१. क. जायन्ते । २. क. ऽप्याकृते । ३. स्त्वां । ४. मोहिताम् ।

गुणानां तु समुद्रेकात् कर्मभिः स्वैश्शुभाशुभैः ।
उत्तमामधमां मध्यां गतिं गच्छन्ति देहिनः ॥ 63

तेषां सत्त्वगुणोद्रेके गतिर्देवत्वमिष्यते ।
मानुष्यं राजसात्प्रोक्तं तिर्यक्त्वं तमसस्तथा ॥ 64

एवं शरीरिणस्सर्वे गच्छन्ति विविधां गतिम् ।
कालचक्रं समारुह्य भ्रमन्त्यज्ञानमायया ॥ 65

ब्रह्मा

किं कालचक्रमित्युक्तं देवदेव मम त्वया ।
तस्य स्वरूपमिच्छामि श्रोतुं शक्यं यदि प्रभो ॥ 66

परमः

कालः सृजति भूतानि कालः संहरति प्रजाः ।
कालः सर्वेषु जागर्ति कालो हि दुरतिक्रमः ॥ 67

कालो विभजते सर्वं पुरुषार्थं परापरम् ।
भूतं भव्यं भविष्यच्च सर्वं कालात्प्रवर्तते ॥ 68

ग्रहनक्षत्रराशीनां गतिरावृत्तिलक्षणम् ।
तयोस्तस्य परिच्छेदो बहुधा संप्रवर्तते ॥ 69

तस्या[स्य] द्वादशभिर्भेदै र्विभागः परिकीर्तितः ।
अयने ऋतवो मासाः पक्षाश्च तिथयस्तथा ॥ 70

सवनानि तथा यामा मुहूर्ता नाड्य एव च ।
कलाश्चैव विनाड्यश्च प्राणाश्च द्वादशस्मृताः ॥ 71

संवत्सरः पतिस्तेषां कालात्मा तैजसोद्भवः ।
तस्य नेमिद्वयं प्राहुर्यदुक्त मयनद्वयम् ॥ 72

सवनानि पुनस्त्रीणि नाभित्रयमुदाहृतम् ।
अराणि मासा विज्ञेयाः पक्षस्तत्वानि पद्मज ॥ 73

१. क. सुवपोनि ।

ऋतवः षड्वदङ्गानि पादाद्याः परिकीर्तिताः ।
अङ्गुल्यो हस्तपादेषु मुहूर्ताः परिकीर्तिताः ॥ 74

नाड्यो नाड्यस्तु तस्योक्ताः कलाः केशा व्यवस्थिताः ।
विनाड्यो रोमकूपास्तु प्राणानि श्वसितानि तु ॥ 75

इतीदं चक्रमारुह्य जगत्स्थावरजङ्गमम् ।
उदयास्तमयं यान्ति [याति] यथैव ग्रहतारकाः ॥ 76

पर एव पुमान् ब्रह्म कालो भूत्वा व्यवस्थितः ।
लोकसंव्यवहारार्थं चक्रं भ्रमयति ध्रुवम् ॥ 77

अनेनैव जगत्सर्वं भ्रमयद्गुणमायया ।
आस्ते कृतिपरो देवः क्रीडन्निव सनातनः ॥ 78

तस्य यद् द्वादश प्रोक्ता मूर्तयः कमलासन ।
ताभ्य एव क्रमाज्जाताः पुनर्द्वादशशक्तयः ॥ 79

योगेश्वरी सुखा चैव प्रज्ञा तुष्टिः स्मृतिस्तथा ।
दीप्तिरागाच वाङ्नीतिः कान्तिश्चैवा[1]मृतास्तथा ॥ 80

[2]शक्तिस्सर्वात्मिका चेति द्वादशैताः प्रकीर्तिताः ।
एता जगदिदं प्राप्य सर्वकालमवस्थिताः ॥ 81

एताभ्यो मूर्तिपालाश्च द्वादशैवाभवन्पुनः ।
तथा [3]तथैव तेशक्त्या विख्याता भुवनेष्विह ॥ 82

मासानामधिपांश्चापि विद्धि तानेव पद्मज ।
विष्णुराद्यो मधौ ज्ञेयो माधवे मधुसूदनः ॥ 83

शुक्रे त्रिविक्रमः प्रोक्तः शुचौ मासेतु वामनः ।
नभसि श्रीधरो ज्ञेयो हृषीकेशो नभस्यपः ॥ 84

---

१. ख. मृति. २. ख. सक्ति ३. ख. तयैव,

पद्मनाभ इषे ब्रह्मन् ऊर्जे दामोदरः प्रभुः ।
केशवस्संहसि[1] प्रोक्तः संस्ये[2] नारायणः प्रभुः ॥ 85

माधवस्तपसि ज्ञेयो गोविन्दस्तु तपस्यपः ।
इति द्वादश मासेन्द्रा मासिमासि व्यवस्थिताः ॥ 86

कीर्तितास्ते यथासंख्यं महावीर्या महागुणाः ।
स एव भगवान् देवः परमात्मा जगद्गुरुः ॥ 87

देवतादिविभागेन विभिन्नो व्यवतिष्ठते ।
यथैव भिन्नवर्णानां द्रव्याणामाश्रये सति ॥ 88

स्फाटिकस्य मणे रूपमन्यच्चान्यच्च लक्ष्यते ।
तथा गुणमयैर्भावैरेको हि पुरुषः परः ॥ 89

भिन्नरूपो जगत्यस्मिन् बद्धो मुक्तश्च जायते ।
स एव चर्यामनुस्यात् चन्द्रमा चन्दनादपि ॥ 90

यमनाद्यम इत्युक्तः शकनात् शाकइत्यपि ।
वायुर्वानादसौ ज्ञेयो वहनाद्वह्निरेव च ॥ 91

हरश्च हरणेनैव ब्रह्मा ब्राह्मणकर्मणा ।
इत्येवं देवता भेदा ज्ञेयास्तस्यैव शक्तयः ॥ 92

न शक्याः परिसंख्यातुं वैश्वरूप्यान्महात्मनः ।
त्रयस्तत्र प्रधानास्तु सर्वलोकेषु विश्रुताः ॥ 93

पुरुषाः कीर्तिताः पूर्वं ब्रह्मा गो विष्णुरित्यपि ।
तत्रापि तत्सत्ववृत्त्या जगतां चापि रक्षणात् ॥ 94

अपवर्गतरत्वाच्च विष्णुरेव विशिष्यते ।
सर्वेषां पुरुषाणां तु यस्मादेवं विशिष्यते ॥ 95

सर्वं कल्याणहेतुत्वात् तेनासौ पुरुषोत्तमः ।
नारायणमयं प्राहुरुभौ निश्रेयसोदयौ ॥ 96

१. क. स्सहवि. २. ख. सहस्ये.

स एव कुशलस्तत्र तेन नारायणस्तु सः ।
वासवो वसनादेहे सर्व एव शरीरिणः ॥ 97
तेषां सामान्यदेवोऽसौ वासुदेव इति स्मृतः ।
यस्माद्व्याप्तं जगत्तेन तस्माद्विष्णुरिति स्मृतः ॥ 98
हरणादेव दुःखानां हरिरित्यभिधीयते ।
स तु देवश्चतुर्व्यूहो भुवनेष्वधितिष्ठते ॥ 99
धर्मादिषु परां सिद्धिमवाप्य हितकाम्यया ।
वासुदेवः स्मृतो धर्मो ज्ञानं सङ्कर्षणः स्मृतः ॥ 100
तथा विमुक्तः* प्रद्युम्नोऽनिरुद्धस्सकलेश्वरः ।
यत्र व्यक्ता स्समस्ताश्च चत्वारस्तु गुणा इमे ॥ 101
तत्र देवाः प्रसीदन्ति चत्वारो भक्तवत्सलाः ।
अधर्माद्यास्तु चत्वारो यत्र दोषा व्यवस्थिताः ॥ 102
तं प्रसह्य विगृह्णन्ति[१] मज्जयन्ति विपत्सुच ।
वेदानामाश्रमाणांतु वर्णानां तु दिशां तथा ॥ 103
विभागमेते कुर्वन्ति चत्वारो भुवनेश्वराः ।
इत्येषस्सृष्टिमार्गस्ते संक्षेपात्कथितो मया ॥ 104
भूतकामस्य बाहुल्यात् विस्तारो नैव शक्यते ।
निसर्गविपरीतस्तु प्रलयस्य समः स्मृतः ॥ 105
प्रलयान्ते पुनःप्राप्ते निर्व्यापारः परः पुमान् ।
विज्ञानघनरूपोऽसौ परमे व्योम्नि तिष्ठति ॥ 106
तमेवं पुरुषं विष्णुं मामवेहि पितामह ।
मायया शयितं ब्रह्मन् नागेन्द्रे क्षीरसागरे ॥ 107
मामेव बहुधा यज्ञैर्यजन्ते सर्वमानवाः ।
अनुध्यायन्ति मामेव योगिनो विजितेन्द्रियाः ॥ 108

---

* [विरक्तः ?] १. ख. नि.

स्तुत्यैः स्तुवन्ति मामेव भक्त्या संपूजयन्ति च।
प्रवदन्ति च मामेव वेदशाखाशिरांसि च ॥ 109

अहमेव विराडात्मा सर्वे लोकात्मकः स्थितः।
मयि लोकाः स्थितास्सर्वे तेनास्मि जगतः प्रभुः। 110

भक्तिमन्तः प्रपद्यन्ते नित्यं मामेव ये नराः।
सिद्धिमन्तो भविष्यन्ति कृतार्थास्ते न संशयः ॥ 111

इच्छाद्वयं च मे ब्रह्मन् प्राणिनः प्रतिजायते।
एकाऽपेक्षाऽपरोपेक्षा नित्यं याभ्यामहं स्थितः ॥ 112

शुभकर्मकरान् भक्ताननुगृह्णामि पूर्वया।
अधार्मिकानभक्तांश्च निगृह्णाम्यनया पुनः ॥ 113

यत एव मतोलब्ध्वा शरीरं सर्वसाधनम्।
विशुद्धं कर्म कर्तव्यं मत्प्रसादाय देहिभिः ॥ 114

प्रसन्ने मयि सर्वेषां पुरुषाणां पितामह।
स्वर्गोवाऽप्यपवर्गोवा भविष्यति न संशयः ॥ 115

इत्येतत्कथितं ब्रह्मन् सारमुध्दृत्य सर्वतः।
लोकमात्रं परं गुह्यं किं भूयः श्रोतुमिच्छसि ॥ 116

इति श्रीपाञ्चरात्रे परमसंहितायां
सृष्टिक्रमो नाम
द्वितीयोऽध्यायः

श्री.

# अथ तृतीयोऽध्यायः ॥



ब्रह्मा

यत्त्वया परमो देवः कथितस्सर्गकारणम् ।
कथं संपूजनं तस्य ध्यानं वा संभवेन्नृणाम् ॥ 1

नह्यसौ कारणैः कश्चित् [ कश्चित्? ] परिच्छिन्नः कदाचन ।
दिग्देशकालरूपैश्च न रूपं तस्य निश्चिनः ॥ 2

अथ तस्य कथं पूजा कर्तव्या सिद्धिमीप्सता ।
एतद्ब्रूहि कथं न्याय्यं देवदेव परं हितम् ॥ 3

परमः

गुह्यमेतत्त्वया पृष्टं वक्ष्यामि हितकाम्यया ।
यादृशं देवदेवस्य पूजनं तद्विधं श्रुणु ॥ 4

मूर्तिमानेव पूज्योऽसावमूर्तेर्नतु पूजनम् ।
कार्यार्थं मूर्तयस्तस्य लोकानुग्रहहेतवः ॥ 5

अतः पुरुषरूपेण कल्पयित्वा तमच्युतम् ।
अभ्यर्च्य परया भक्त्या सिद्धिं गच्छन्ति मानवाः ॥ 6

निराकारे तु देवेशे नार्चनं संभवेन्नृणाम् ।
नच ध्यानं नच स्तोत्रं तस्मात्साकारमर्चयेत् ॥ 7

आकारे तु कृता पूजा स्तुतिर्वा ध्यानमेववा ।
विधिना शास्त्रदृष्टेन देव एव कृता भवेत् । 8

भक्त्या परमयाऽकृष्टो देवदेवस्स योगिभिः ।
तेषामनुग्रहार्थाय रूपं भेजे चतुर्भुजम् ॥ 9

तस्मात्तेनैव रूपेण देवदेवं समर्चयेत् ।
फलभेदात् द्विधा तस्य पूजनं शास्त्रचोदितम् ॥ 10

फलमभ्युदयः पूर्वं निर्वाणं तु परं फलम् ।
अपरश्च परश्चेति तयोर्देवोऽपि भिद्यते ॥ 11

उदयायापरः पूज्यो निर्वाणाय परः पुमान् ।
तत्राष्टभुजमाकारं कल्पयित्वा सुवाहनम् ॥ 12

सायुधं सपरिवारं च उदयार्थी प्रपूजयेत् ।
महेन्द्रनीलसङ्काशं पद्माक्षं पीतवाससम् ॥ 13

पूजाकालश्च पूर्वाह्णः कालस्संवत्सरोऽवमः ।
अविच्छेदश्च पूजाया नित्यमाफललाभतः ॥ 14

अत्यभ्युदयकाल[म]स्य पूजनं परिकीर्तितम् ।
निश्श्रेयसार्थिनो ब्रह्मन् यथा पूजा तथा श्रुणु ॥ 15

शङ्खं चक्रं गदा पद्मं चतुर्भिर्धारयेत् [यन्] भुजैः ।
अर्चनीयः परो देवः शुद्धस्फटिक सन्निभः ॥ 16

सृष्टिबीजं तथा पद्मं चक्रं स्थितिनिबन्धनम् ।
गदा संहारबीजंतु शङ्खं मुक्तिनिबन्धनम् ॥ 17

मध्यंदिनादिकालोऽयं यथाशक्ति च पूजनम् ।
फलेषु निरपेक्षस्त्वं यावज्जीवं तु पूजनम् ॥ 18

सर्वतत्त्वयुतस्यैव पूजा संहारमार्गतः ।
इत्येवं मोक्षकामस्य पूजनं ते प्रकीर्तितम् ॥ 19

तयोस्तु पूजयोर्ब्रह्मन् मोक्षपूजा विशिष्यते ।
आत्यन्तिकफलत्वात्तु नेतरा तद्विपर्ययात् ॥ 20

कृतस्य कर्मणो नाशो नास्ति जन्मशतेष्वपि ।
संपातात्पुष्टिरेवस्या दसंयोगा फलान्तरे[1] ॥ 21

१. ख. फलान्तरैः ।

सुखं चानुत्तमं मुक्तिरदुःखमपि[1] नश्वरम् ।
तस्मात्सर्वप्रयत्नेन मोक्षहेतोरतन्द्रितः ॥ 22
वासुदेवमुपासीत चोदयार्थी महामना: ।
त्रिविधं पूजनं तस्य कर्मणा वचसा धिया ॥ 23
उत्तरोत्तरमेतेषां महाफलमिति स्थितिः ।
गन्धपुष्पादिभिर्द्रव्यैर्विमलैस्साधुसम्मतैः ॥ 24
मन्त्रेण विनियोगस्तु कर्मयज्ञ इति स्मृतः ।
स्तोत्राणां चैव मन्त्राणां शुचिर्भूत्वा समाहितः ॥ 25
यज्जपं कुरुते भक्त्या वाग्यज्ञ इति संस्मृतः ।
सर्वं बाह्यं परित्यज्य मानसैव यथाविधि ॥ 26
यदर्चयाति देवेशं मनोयज्ञस्स उच्यते ।
एकैकस्य त्रिधा भेदो ब्रह्मन् शक्तिवशा(त्)स्मृतः ॥ 27
सात्त्विकी राजसी चैव तामसी चैव सा त्रिधा ।
सात्विकी मुक्तिहेतोस्तु राजसी कामसिद्धये ॥ 28
तामसी परपीडार्थं पूर्वपूर्वा गरीयसी ।
ब्राह्मणाः क्षत्रिया वैश्याश्शूद्रा योषित एव च ॥ 29
भक्तियुक्ताः स्वभावेन कुर्याद्देवस्य पूजनम् ।
समृद्धाश्च दरिद्राश्च युवानः स्थविरास्तथा ॥ 30
पण्डिता योगिनो वापि कुर्युर्देवस्य पूजनम् ।
हरिपादार्चनादन्यन्न किंचित् परमं हितम् ॥ 31
तस्मात्सर्वप्रयत्नेन वैष्णवः पुरुषो भवेत् ।
न कश्चित्फलदो लोके तं मुक्त्वा[2] पुरुषोत्तमम् ॥ 32
तदिच्छया प्रवर्तन्ते कर्माणि च फलानि च ।
न सम्पदां समाहारे नापदां विनिवर्तने ॥ 33

१. ख. मिव. २. ख. नो.

समर्थः पुरुषः कश्चित् तस्माद्देवमुपाश्रयेत ॥ 34

ब्रह्मा

कथं पूज्यस्स देवेशः पूजकः कीदृशो भवेत् ।
अनुष्ठानं च किं तस्य फलं वा कीदृशं भवेत् ॥ 35

परमः

अर्चनस्य विधिं वक्ष्ये तव ब्रह्मन् समाहितः ।
यथा भागवतः कुर्याद्यागं भगवतो हरेः ॥ 36
समयोऽग्रे समाचारः स्वाध्यायो द्रव्यसंग्रहः ।
शुद्धिर्योगस्स्तुतिर्ध्यानमित्येवं विधिरष्टधा ॥ 37
विधिनाऽनेन यस्तिष्ठेत् स भागवत उच्यते ।
जन्मान्तरकृतैः पुण्यैर्नरो भागवतो भवेत् ॥ 38
द्विविधः पुरुषो ब्रह्मन् दीक्षितोऽदीक्षितस्तथा ।
दीक्षितस्सकलं कुर्यादेकदेशमदीक्षितः ॥ 39
समयस्तु द्वयोस्तुल्यः तस्मात्समयमाचरेत् ।
ध्यातव्यो भगवानेव नान्यो विश्वस्य कारणात् ॥ 40
स्वामित्वेन गुरुत्वेन सुहृत्त्वेनच सर्वदा ।
तद्विद्याध्ययनंचैव तद्गुणश्रवणादरः ॥ 41
तद्भक्तेषुच विश्वासः कर्मणा मनसा गिरा ।
द्रव्यकर्मगुणानां च सात्विकानां निषेवणम् ॥ 42
न कदाचिन्मतिं कुर्यात् परतन्त्रनिषेवणे ।
देवागारं समीपस्थं कुर्याद्देवं प्रदक्षिणम् ॥ 43
निर्माल्यं लङ्घयेन्नैव न भुञ्जीत न संस्पृशेत् ।
न दद्याच्च न जिघ्रेच्च रक्षेत्........,च ॥ 44

स्तोत्राणि सततं तत्र शुचिर्भूत्वा स्वयं जपेत् ।
सायं प्रातर्दिशोपश्च [दिवा मध्यं?] ध्यात्वा नारायणं प्रभुम् ॥ 45

सुप्तोत्थितः स्वयं गच्छन् नमस्कुर्वन् पतन्नपि ।
प्रतिगृह्णन् दधानंच [नश्च] मन्त्रमष्टाक्षरं जपेत् ॥ 46

पाषण्डसमयस्थांश्च देवकोशोपजीविनः ।
नास्तिकान् निन्दितान्दुष्टान् न स्पृशेन्न च संवदेत् ॥ 47

आसनं शयनं यानं नातिष्ठेच्च[1] कुरूपकम् ।
न पादौ तत्र कुर्वीत यत्र रूपं हरेः स्थितम् ॥ 48

स्थानानि श्रुणुयाद्विष्णोस्तीर्थानि च विशेषतः ।
उपासकांश्च सिद्धांश्च बान्धवानिव सर्वदा ॥ 49

नाशुद्धद्रव्यमश्नीयान्नाशुभैश्च समाहृतम् ।
न मांसं नच मद्यानि मद्यपैर्वा मनःशृतम् ॥ 50

दीक्षितः श्राद्धसङ्घातसूतान्नानि विवर्जयेत् ।
अशुचिर्न भवेन्नित्यं धीरो भागवतो भवेत् ॥ 51

वैष्णवांश्च विशिष्टांश्च पञ्चरात्रविशारदान् ।
कर्मणां विचिकित्साधुः[स्यात्?] सर्वकालं विचारयेत् ॥ 52

नापृष्टस्तु स्वयं ब्रूयान्नचान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी[2] जडवल्लोकमाचरेत् ॥ 53

व्यासीना [व्याधीनां?] स्संप्रयोगे च भये च प्रत्युपस्थिते ।
अष्टाक्षरं जपेन्नित्यं द्वादशाक्षरमेव वा ॥ 54

प्रमादे वाऽपराधे वा लङ्घने समयस्य च ।
प्रायश्चित्तं जपं कुर्यात् सहस्रं शतमेववा ॥ 55

---

१. ख. चक्र । २. क. मे साध्वी ।

इत्येवं समयः प्रोक्तो ब्रह्मन्नुद्देशतस्तव ।
अन्यच्च वैष्णवे धर्मे विहितं परिपालयेत् ॥ 56

आचारमधुना वक्ष्ये कार्यं भागवतैस्सदा ।
आचारो नित्यकर्मैव शास्त्रदृष्टं प्रकीर्त्यते ॥ 57

उषःकाले मलोत्सर्गं कृत्वा प्रक्षाल्य वाग्यतः ।
शुचिराचम्य सन्ध्यायां पञ्चोपनिषदं जपेत् ॥ 58

शतकृत्वः सहस्रंवा दशकृत्वोथवाऽपदि ।
भास्करं कालमन्त्रेण स्वमन्त्रेण दिशां क्रमात् ॥ 59

नमस्कृत्वा शुचिर्भूत्वा मन्त्रमष्टाक्षरं जपेत् ।
द्वादशाक्षरमेवापि यथासंभव मन्वहम् ॥ 60

स्तोत्राणि च जपित्वान्ते देवदेवमनुस्मरेत् ।
भक्तैश्च सह संभाष्य ब्राह्मणैस्तु विशेषतः ॥ 61

अनुतिष्ठेत्स्वकर्माणि नित्यं धर्मोक्तमेव च ।
मन्त्राणि श्रुणुयाद्विष्णोः कथां यां पापनाशिनीं ॥ 62

तद्भक्तैस्सहवर्तेत विवादं तेषु वर्जयेत् ।
त्रिकालमेककालं वा शक्तितः पुरुषोत्तमम् ॥ 63

स्नात्वा भक्त्या यजेद्देवं नित्यकर्मण्यतन्द्रितः ।
अयनादिषु [सर्वेषु?] द्वादश्यां च विशेषतः ॥ 64

पुण्यस्थानेषु तीर्थेषु विशेषेण प्रपूजयेत् ।
विष्णुरूपाणि संपश्येत्प्रयत्नेनापराणिवा ॥ 65

तत्र तत्र नमस्कृत्य तमेव प्रतिपद्यते ।
नानृतं सफलं कुर्यात् कदाचिद्देवपादयोः ॥ 66

आपत्काले वि[ऽपि]वर्तेत देव बिम्बस्य नोपरि ।
देवदेवाश्रयान् धीरो निभृतं कीर्तयेत् कचित् ॥ 67

१. ख. यम्.

कारणे समनुप्राप्ते न वाच्यमिनि कीर्नयेन्।
ग्रासमुष्टिं गवे दद्यात् प्रागेवाशनकालनः॥ 68

नाननुज्ञाप्य भुञ्जीन यतीन् भागवतानपि।
दीक्षितानां समाचारं वक्ष्ये तव पितामह॥ 69

यथा भागवतानां हि सिद्धिर्भवति शाश्वती।
प्रातरेवोत्थितो मौनी मनसा सर्व मुच्चरन्॥ 70

प्राङ्मुखो गन्तुकामस्तु वामपादं न्यसेद्भुवि।
प्रविशेद्वामपादेन निवृत्यात्मान मुच्चरेत् [रन्?]॥ 71

मलप्रक्षालनं कृत्वा मृद्भिरद्भिश्च शास्त्रतः।
स्पृष्ट्वा विश्वात्मना तोयमाचामेत्पुरुषात्मना॥ 72

परमेष्ठ्यात्मना प्रोक्ष्य शिरस्सर्वाङ्गमेववा।
सन्ध्यामुपास्य विधिना जपित्वा च यथाक्रमम्॥ 73

मनोमन्त्रेण सङ्कल्प्य परमात्मानमव्ययम्।
स्पृष्ट्वाहंकारमन्त्रेण इन्द्रियाणि सकृत्सकृत्॥ 74

अभिवन्द्यास्पृशेद्गांच कपिलां बुद्धिविद्यया।
मन्त्रं परमनुस्पृश्य लौकिकं कार्यमाचरेत्॥ 75

दत्वा देवाय विप्रेभ्यो गन्धमात्रस्य विद्यया।
तेनैव गन्धमालभ्य हस्तशौचं समाचरेत्॥ 76

भेषजान्युपयुञ्जीत रसमात्रस्य विद्यया।
दर्शनं रूपमन्त्रेण पुष्पाण्याभरणानि च॥ 77

स्पर्शमन्त्रेण वस्त्राणि मङ्गलान्यासनं तथा।
शृणुयाच्च शुभां वाचं शब्दमात्रस्य विद्यया॥ 78

महाभूतेषु सर्वेषु तन्मात्रेणैव संस्मरेत्।
अशुचीनां च संस्पर्शे कुत्सितान्नस्य भोजने॥ 79

अन्येषु चाप्यपथ्येषु पञ्चगव्यं नरः पिबेत् ।
संगृह्योपनिषन्मन्त्रै भोजने विमले क्रमात् ॥ 80

गोमूत्रं गोमयं सर्पि र्दधि क्षीरंच पञ्चमम् ।
परमेष्ठ्यादिभिः पीत्वा तैर्देहमभिमन्त्रयेत् ॥ 81

एवं पापाद्विमुक्तः स्यात् कार्य[य?]शुद्धिश्च जायते ।
मन्त्रैः स्नात्वा विधानेन वासुदेवं जगद्गुरुम् ॥ 82

कृतरक्षोऽर्चयेन्नित्यं तन्मन्त्रैः कृतविग्रहम् ।
शुध्यर्थं प्रथमं स्नात्वा मन्त्रस्नानं समाचरेत् ॥ 83

सर्वेण मृदमादाय निवृत्त्या वारि शोधयेत् ।
विश्वेन तीर्थमावाह्य पुरुषेणानुलेपयेत् ॥ 84

परमेष्ठ्यात्मना स्नाया दाचामेद्विधिना पुनः ।
पञ्चोपनिषदा प्रोक्ष्य सर्वगात्रं विशोधयेत् ॥ 85

अन्तर्जलगतो[1] भूत्वा पञ्चमन्त्रान् क्रमाज्जपेत् ।
प्राणायामैः त्रिभिर्द्वाभ्यामेकेन विनयेन वा ॥ 86

जपित्वातु कृतस्नानः परिधायाथ वाससी ।
आचान्तः प्राङ्खो(मु) भूत्वा कुशलं निस्समाहितः ॥ 87

जपेत्परमहंसंतु त्रिमात्रं प्रणवं तथा ।
सहस्रं शतवारंवा द्वादशाष्टाक्षरावपि ॥ 88

आदित्यमुपतिष्ठेत पूर्वं मुक्ता(क्त्वा) जलाञ्जलिम् ।
एतैरेव महामन्त्रैः कालेन च कृताञ्जलिः ॥ 89

सूक्ष्मं तेजोमयं ध्यात्वा मण्डलस्थं परं प्रभुम् ।
तर्पयेद्देवताः पश्चादुदकेन यथाक्रमम् ॥ 90

---

१. क. मैल ।

इन्द्रादीन् विष्णुपूर्वांश्च वासुदेवादिकानपि ।
मूर्तीर्द्वादशशक्तींश्च परमात्मानमेव च ॥ 91

पृथिव्यादीनि भूतानि ऋषींश्च पितृभिस्सह ।
आदौ नाम द्वितीयान्तं तर्पयामीति चोत्तरम् ॥ 92

एषमन्त्रस्तु निर्दिष्टः तर्पणेतु यथातथम् ।
संतर्प्य पुनराचम्य यागस्थानं समाचरेत् ॥ 93

यत्राराध्य परं देवं विधिना वैष्णवो नरः ।
शेषभोजी परां सिद्धिमचिरेणैव गच्छति ॥ 94

इति श्रीपाञ्चरात्रे परमसंहितायां
विनयो नाम
तृतीयोऽध्यायः ॥

श्रीः

# अथ चतुर्थोऽध्यायः ॥

ब्रह्मा

श्रोतुमिच्छाम्यहं देव विष्णोराराधनं परम् ।
कथमभ्यर्चनीयोऽसौ वैष्णवः पुरुषोत्तमः ॥ 1

परमः

अथातः संप्रवक्ष्यामि विष्णोराराधनक्रमम् ।
यस्याभ्यासादवाप्नोति भक्तिमान् वैष्णवं पदम् ॥ 2

यागस्थानं समासाद्य प्रक्षाल्याचम्य वाग्यतः ।
मन्त्रेण गृहमालोक्य वेदिस्थण्डिलमेव च ॥ 3

वेदिं प्रदक्षिणं कृत्वा नमस्कृत्य समाहितः ।
कृत्वोपवीतवद्वस्त्रमुत्तरं प्राङ्मुखश्शुचिः ॥ 4

आसीनः प्रणवेनाथ परामृश्य करावुभौ ।
कनिष्ठादिषु विन्यस्य पञ्चोपनिषदः क्रमात् ॥ 5

षडङ्गमेकहस्तेन मुद्रामन्त्रैस्समाचरेत् ।
अस्त्रमन्त्रेण दिग्बन्धं कृत्वा सर्वासु दिक्षु च ॥ 6

अग्निप्राकारमध्यं च तेजोमन्त्रेण सर्वतः ।
आत्मरक्षां विधायैवं आचरेद्धारणाक्रमम् ॥ 7

प्राणायामैस्त्रिभिर्युक्तं बध्वाऽऽदौ योगसंपुटम् ।
पूरणाद्रेचनाद्वायो रेचनाद्वापि यत्नतः ॥ 8

भवेत्प्राणकृतः पुंसः प्राणायामस्स उच्यते ।
नाभिपद्मे ततो वायुं संचिन्त्य पुरुषात्मना ॥ 9

धारयेत्तत्र चैतन्यं वायुभूतं विशोषनः ।
ततोविश्वात्मना वह्निं हृदि संचिन्त्य भास्करम् ॥ 10

धारयेत्तत्र चैतन्यमग्निभूतं समन्ततः ।
माहेन्द्रस्तं भवं कण्ठे ततस्सर्वेण धारयेत् ॥ 11

निवृत्त्या वरुणं मूर्ध्नि वारिरूपं च धारयेत् ।
कृष्णा रक्ता च पीता च शुक्लरूपा च धारणा ॥ 12

त्रिभिस्त्रिभिः स्मृतैकैका प्राणायामैर्यथोदितैः ।
धारणासु च सर्वासु निश्चलेन समाधिना ॥ 13

तद्गुणान्वितमित्येवं जगत्सर्वं विचिन्तयेत् ।
पूरको रेचकः कुंभो निरामय इति क्रमात् ॥ 14

धारणासु च विज्ञेयः कार्यो भागवतैर्नरैः ।
निर्दग्धकल्मषस्त्वेवं धारणाभिः कृतो यदा ॥ 15

ततो योगमयं ध्यानमातिष्ठेदात्मशुद्धिदम् ।
पृथिव्यादीनि भूतानि निश्चलेन समाधिना ॥ 16

प्रलयक्रममास्थाय संहरेत्परमात्मनि ।
ततः स्थूलशरीरान्तां सृष्टिं सर्वां विचिन्त्यच ॥ 17

सृष्ट्वा दक्षिणहस्तेन मन्त्रानुक्त्वा क्रमेणच ।
ध्यात्वा तु कारणान्येव यथास्थानं निवेशयेत् ॥ 18

मध्यास्ये हृदि गुह्येतु तथा पादतलक्रमात् ।
आकाशादीनि भूतानि पञ्चमन्त्रैस्तु विन्यसेत् ॥ 19

एवं मन्त्रमयो भूत्वा महायोगसमाधिना ।
अमृतोदकसंपूर्णैः कलशैर्हेमनिर्मितैः ॥ 20

दिङ्नारीणां करधृतैरात्मानमभिषेचयेत् ।
संचिन्त्य हृदये सूर्यं भास्वरं मण्डलाकृतिम् ॥ 21

तस्मिन् संचिन्त्य सोमं तु तथा सोमेऽग्निमण्डलम् ।
एवमन्तर्बहिश्चापि शरीरं मन्त्रनिर्मितम् ॥ 22

कल्पयित्वा हरेः पूजां कर्तुमर्हति साधकः ।
संकृदेव[1] स्वयं भूत्वा देवदेवं समर्चयेत् ॥ 23

समानव्यवहारेऽपि नपूज्यः पूजकोऽपि वा ।
शरीरं प्राकृतं तस्मात् संहृत्य प्रलयक्रमात् ॥ 24

विशुद्धमन्यदुत्पाद्य पूजयेत्पुरुषोत्तमम् ।
स्थण्डिले प्रतिमायां वा जलेवाऽग्नावथापिवा ॥ 25

मनसा वा यजेद्देवं हृद्याकाशेऽथमण्डले ।
सूर्यमण्डलमध्ये वा यथा सम्भवमर्चयेत् ॥ 26

द्रव्याणि पूर्वमाहृत्य विशुद्धानि समन्ततः ।
परमेष्ठ्यात्मना प्रोक्ष्य यागपीठं प्रकल्पयेत् ॥ 27

पीठं सिद्धमयं तत्र देवस्संपूज्यते हरिः ।
वासुदेवादयः पादा यागपीठस्य निष्ठिताः ॥ 28

अधर्माद्यास्तु चत्वारः पादपीठाः प्रकीर्तिताः ।
आग्नेय्यां वासुदेवस्तु धर्ममूर्तिः प्रतिष्ठितः ॥ 29

नैर्ऋत्यां ज्ञानमूर्तिस्तु देवः सङ्कर्षणः स्थितः ।
प्रद्युम्नो दिशि वायव्यां वैराग्यात्मा व्यवस्थितः ॥ 30

[2]ऐश्वर्यमूर्तिरैशान्या मनिरुद्धो व्यवस्थितः ।
वंशाश्चत्वार एव स्युरधर्माद्यास्तु बुद्धयः ॥ 31

अहंकारास्त्रयः पाशाऽ[3]यैतनास्तु त्रयोगुणाः ।
स्तरणान्यस्य भूतानि रुद्रच्छदनमुच्यते ॥ 32

तस्मिन् ब्रह्मोद्भवं पद्मं सिद्धं द्वादश पद्मकम् ।
अन्तःकेसरसंपूर्णं मध्ये विपुलकर्णिकम् ॥ 33

१. ख. सकृ. २. अथमधोंऽधिकः ख पुस्तके । ३. ख. पतना ।

अधिष्ठाना विराडस्य लोकमूर्तिः प्रजापतिः ।
पद्मपत्रेषु विज्ञेयाः क्रमात् द्वादश मूर्तयः ॥ 34

मोहिन्याद्या स्त्रिपश्चैनाः केसरेषु तु शक्तयः ।
गुणयोनित्रयं मूले कर्णिकायाः क्रमेणतु ॥ 35

गुणशक्तित्रयं मध्ये क्रमेणैव व्यवस्थितम् ।
अग्नि स्सोमश्च सूर्यश्च तेषामुपरिनिष्ठिताः ॥ 36

एवमेतद्यथान्यायं पीठमन्त्रैः प्रकल्प्यच ।
गन्धपुष्पादिभिः पूजां देवपीठस्य कल्पयेत् ॥ 37

पराभिश्शक्तिभिस्तस्मि न्विग्रहं परमात्मनः ।
चतुर्भुजमनुध्याये च्छुद्धस्फटिकनिर्मलम् ॥ 38

शङ्खचक्रगदापद्मै श्चतुर्भिः कृतलक्षणम् ।
तस्मिन्नावाहयेद्देवं परमात्मानमच्युतम् ॥ 39

अञ्जलौ मनसा पीठं प्रथमं परिकल्पयेत् ।
आवाहयेत्ततो देवं संभृत्यै तत्र सर्वगम् ॥ 40

चेतनं नित्यतृप्तं च प्रणवे परमेष्ठिना ।
प्रणवे संनिविष्टन्त माह्वयेत्पुरुषात्मना ॥ 41

अञ्जलिस्थे ततः पीठे ध्यायेद्विश्वात्मना परम् ।
निवृत्त्यात्मान मुच्चार्य तं देहे विनिवेशयेत् ॥ 42

सर्वात्मना शरीरेण संयुक्तमनुचिन्तयेत् ।
प्रणम्य किंचिदुत्थाय प्रयुज्य स्वागतं पुनः ॥ 43

सान्निध्यं प्रार्थयित्वा च सत्वस्य गुणविद्यया ।
रजसः शक्तिमन्त्रेण दद्या त्पाद्यादिकं क्रमात् ॥ 44

अष्टाक्षरेण मन्त्रेण दद्यादर्घ्यं यथाविधि ।
मुखवासं ततो दद्या त्तसमात्रस्य विद्यया ॥ 45

दत्वा धूपेन माल्यादि लब्धानुज्ञः प्रदक्षिणम् ।
दत्त्वाऽग्निकार्य मारभ्य संस्कृत्य विधिवद्धविः ॥ 46

देवपार्श्वे समासाद्य यथाव द्विधिपूर्वकम् ।
तमसः शक्तिमन्त्रेण स्नानं देवस्य कारयेत् ॥ 47

पञ्चोपनिषदा कृत्वा शान्तिं शुद्धेन वारिणा ।
गुणमन्त्रेण वस्त्रे द्वे दद्या यज्ञोपवीतिकम् ॥ 48

दद्यादाभरणान्येव संभवान्मनसाहिवा ।
दद्याच्चैव शुभान् गन्धान् गन्धमात्रस्य विद्यया ॥ 49

दद्यात्पुष्पाणि मालाश्च रूपेणादर्शमेवच ।
स्पर्शमन्त्रेण धूपंच दीपं रूपस्य विद्यया ॥ 50

अर्घ्यं दत्वा विधानेन द्वादशाक्षरविद्यया ।
हवींषि रसमात्रेण भक्ष्यभोज्यादिकं पुनः ॥ 51

तोयं च मुखवासं च दत्वा मन्त्रेण पूर्ववत् ।
स्तोत्राणि शब्दमात्रेण निवेद्य प्रणिपत्यच ॥ 52

दिङ्मन्त्रेण परिक्रम्य नमस्कृत्य प्रदक्षिणम् ।
कालेन जपकालं च शुभं कृत्वा यथेप्सितम् ॥ 53

जपं [पन्?] परमहंसं च द्वादशाक्षरमेव च ।
अष्टाक्षरंच देवेशं ध्यात्वाप्रणवमेव वा ॥ 54

अर्घ्यं परमहंसेन ततो दत्वा प्रणम्य च ।
आत्मानं किङ्करत्वेन निवेद्याथ विसर्जयेत् ॥ 55

आवाहितो यथापूर्वं विसर्गेऽपि तथा स्मरेत् ।
क्रमेण विपरीतेन क्षन्तव्यमितिचार्चयेत् ॥ 56

एतद्धरिविधिर्ह्येषः संक्षेपात्कथितो मया ।
इष्ट्वैव परमात्मानं नित्यं भागवतश्शुचिः ॥ 57

सर्वपापविशुद्धात्मा मुक्तिमार्गं प्रपद्यते ।
लभते चेप्सितान् कामानिहामुत्र च सर्वशः ॥ 58

निस्तरत्यपवर्गांश्च शत्रुभिश्च न बाध्यते ।
संस्कृतश्च विधानेन विदितं तान्त्रिको विधिम् ॥ 59

प्रयुज्य लभते सिद्धि मन्यथा पातकी भवेत् ।
प्रतिमाया मुपासीत पीठं कृत्वा क्रमेणतु ॥ 60

ध्यात्वा योगमयं मूर्ति प्रतिमामेव चेतसा ।
स्थापयित्वा हरिं तस्या मावाह्य विधिना यजेत् ॥ 61

जलमध्येऽपि यागस्य नेति [नवि?] शेषोऽस्ति कश्चन ।
अग्निमध्येतु तत्सर्वं जलशून्यं प्रपूरयेत् ॥ 62

हृद्याभोगेतु यागस्य मनसा सर्वमाचरेत् ।
मण्डले यजमानस्तु कल्पये द्विधिमीदृशम् ॥ 63

योगैश्वर्यादिकाश्शक्ती र्दिक्षु सर्वासु भागशः ।
बहिरावरणे कुर्या द्योगपीठस्य साधकः ॥ 64

तासामपि बहिः कुर्यात् दिक्षु द्वादशमासपान् ।
लोकपालान् बहिस्तेषां वासदिक्ष्विन्द्रपूर्वकम् ॥ 65

चक्रमण्डलमार्गेण सर्वं ध्यात्वा यथाक्रमम् ।
अक्षभूमिगतं पीठं ध्यात्वा देवं समर्चयेत् ॥ 66

सूर्यमण्डलमध्येऽपि यागस्यायं विधिः स्मृतः ।
एवमेतेषु वैकुण्ठं पूजास्थानेषु पूजयेत् ॥ 67

यथायोगं यथाकालं देवपूजाविशारदः ।
स्थण्डिलादिक्रमेणैव लब्ध्वाच प्रत्ययात्पुनः ॥ 68

स्थानेष्वन्येषु यष्टव्यमेवं दोषोऽन्यथा महान् ।
सर्वेषामेव यागाना माशापालान् बहिः स्थितान् ॥ 69

कुर्वीत विघ्नरक्षार्थं यागस्य परमात्मनः ।
सर्वेषामेव यागानां मानसो याग उत्तमः ॥ 70

अप्रसादे हि मनसः कर्मयोगोऽपि निष्फलः ।
स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते ॥ 71

पूजनं हि विना भक्त्या कृतमप्यकृतं भवेत् ।
अष्टाङ्गा भक्तिरुद्दिष्टा वैष्णवस्य विशेषतः ॥ 72

यामवाप्य[1] परां सिद्धि मचिरेणाधिगच्छति ।
देवस्याराधनं नित्यं समयस्यच रक्षणम् ॥ 73

वैष्णवस्य च विश्वासः पूजायामादरो महान् ।
स्वयमाराधने यत्नं तत्कथाश्रवणादरः ॥ 74

परबाधास्वनास्थाच तत्पूजानुपजीवनम् ।
इत्येषाष्टविधा भक्तिर्विद्यते यस्य देहिनः ॥ 75

य इदं श्रुणुयात्तन्त्रं स चेदं वक्तुमर्हति ॥ 76

ब्रह्मा

यदभ्युदयकामस्य प्रोक्तमाराधनं त्वया ।
अपरस्यादिदेवस्य तदिदानीं ब्रवीहि मे ॥ 77

परमः

अयमेवापरस्यापि विष्णोराराधनक्रमः ।
विशेषतन्त्रं वक्ष्यामि सर्वमन्यद्यथोदितम् ॥ 78

अष्टबाहु स्तदाराध्यो रक्तपद्मे जनार्दनः ।
वाहनेनायुधैश्चापि परिवारैश्च संभृतः ॥ 79

अनन्तः पन्नगः प्राच्यां पश्चिमायां च पक्षिराट् ।
देवस्य वामतो लक्ष्मी दक्षिणेन सरस्वती ॥ 80

---

१. क. धाम प्राप्य ।

अग्नेय्यां वृद्धिरेव स्यान्नैर्ऋत्यां सिद्धिरुच्यते ।
वायव्यां मतिरुद्दिष्टा शान्ति रीशानगोचरा ॥ 81
शङ्खं चक्रं गदा पद्मं खड्गं खेटं शरं धनुः ।
इत्यायुधानि देवस्य करेष्वष्टसु पद्मज ! ॥ 82
उरसा कौस्तुभं रत्नं श्रीवत्सं च समुद्वहन् ।
लोकोपकारसिध्यर्थ मनेकं रूपमास्थितः ॥ 83
पूजनीयो विभूत्यर्थं देवो द्वादशमूर्तिभिः ।
हंसं परमहंसस्य स्थाने सर्वत्र योजयेत् ॥ 84
सृष्टिक्रमेण तत्त्वानां विन्यासं परिकल्पयेत् ।
पूजान्ते कामसङ्कल्पं कालेचाच्छिद्रमर्चनम् ॥ 85
सर्वशक्त्या निमित्तेषु वैष्णवानां च भोजनम् ।
दानानि विविधान्येव माचार्याणां च सत्क्रियाम् [या?] ॥ 86
वैष्णवानां च मन्त्राणा मुपदेशैः प्रसाधनम् ।
व्रतानां कालयुक्ताना मविच्छेदेन धारणम् ॥ 87
इत्यभ्युदयकामस्य विधिरेषः प्रकीर्तितः ।
संवत्सरं यजेद्देवं वर्षाणि द्वादशैव वा ॥ 88
वि[द्वि?]विधोऽभ्युदयः प्रोक्तो देवपूजासमाश्रये [यात्?] ।
प्रथमो दृष्टजन्मस्थः परजन्माश्रयोऽपरः ॥ 89
प्रथमो लघुरत्र स्यात् द्वितीयो गुरुरुच्यते ।
कामेनोपास्य देवेश मप्राप्य निधनं गतः ॥ 90
जन्मान्तरे ततो भूयः स तं काममवाप्नुयात् ।
यावज्जीवं तु ये देवं विभूत्यर्थमुपासते ॥ 91
राजानस्ते भविष्यन्ति पूर्णा जनपदेश्वराः ।
अथवा नावगन्तव्यो विशेषः कालनिर्मितः ॥ 92

१. क. रत्नानां ।

तीव्रभक्तिमतां नृणां सिद्धि र्भवति नान्यथा ।
एतदुद्देशतः प्रोक्तमपरस्य पितामह ॥ 93
पूजनं देवदेवस्य बहुधा यत्प्रकीर्त्यते ॥ 94

इति श्रीपाञ्चरात्रे परमसंहितायां
अर्चनाविधानं नाम
चतुर्थोऽध्यायः

---

श्रीः

# अथ पञ्चमोऽध्यायः ॥

ब्रह्मा

कानि द्रव्याणि पूजाया मेषां संग्रह इष्यते ।
शुचिश्च कीदृशी तेषा मेतन्मे भगवन्वद ॥ 1

परमः

अमा स्थानंच पात्राणि दर्भाम्बु प्रतिमा अपि ।
गन्धपुष्पाणि भूषांश्च धूपदीपाक्षतानिच ॥ 2

अर्घ्यं निवेद्यमित्यादि पूजाद्रव्यं पितामह ! ।
एतानि शोधयित्वाऽग्रे पूजयेत्पुरुषोत्तमम् ॥ 3

तत्रात्मा[त्म?]नो वहु[हि?]श्शुद्धिः स्नानेनाचमनेन च ।
पूर्वमुक्तं मया स्थानं [स्ना?] श्रुणु वक्ष्यामि पद्मज ! ॥ 4

अङ्गुष्ठतलमूलंहि ब्रह्मतीर्थ मिति स्मृतम् ।
त्रिः पिबेद्ब्रह्मतीर्थेन संप्रमृज्य मुखं पुनः ॥ 5

वामहस्तं पुनः प्रोक्ष्य पादयोश्च तले उभे ।
तलेन हृदयं स्पृष्ट्वा मुखमङ्गुलिभिस्तथा ॥ 6

अङ्गुष्ठेऽनामिकां कृत्वा नेत्रं स्पृष्ट्वाच वारिणा ।
तेनैव तर्जनीं कृत्वा तथा द्वे नासिके उभे ॥ 7

कनिष्ठं तु तथा कृत्वा तेनैव श्रवणे स्पृशेत् ।
तथैव मध्यमां कृत्वा बाहुदेशावुभौ स्पृशेत् ॥ 8

तेनैव नाभिदेशंच सर्वैर्युक्तः शिरः स्पृशेत् ।
एतदाचमनं प्रोक्तं दीक्षितस्य विशेषतः ॥ 9

पंच मन्त्रान् क्रमेणोक्त्वा पीत्वोन्मृज्य मुखं पुनः ।
भूय एव तथाचम्य प्रोक्ष्य मन्त्रैस्तु पञ्चभिः ॥ 10
आरभेत हरेः पूजा मन्यदन्यस्समाचरेत् ।
स्नानमद्भिर्मृदा चापि प्रोक्षणाचमनैरपि ॥ 11
शरीरं बहिरन्तश्च पुरुषस्य विशुध्यति ।
सत्यप्रियतमालापैर्वाचःशुद्धिर्विधीयते ॥ 12
ज्ञानप्रसाद सन्तोषा मनसः शुद्धिहेतवः ।
एतत्त्रयं भवेद्यस्य विशुद्धं देहिनस्सदा ॥ 13
तथैव पूजया नित्यं तस्य देवः प्रसीदति ।
एषाऽत्मशुद्धि राख्याता स्थानशुद्धिमतः श्रुणु ॥ 14
द्यूत भोजनयोः स्थानमुच्चारस्थानमेव च ।
आसनंच श्मशानस्य[नंच?] चण्डालाधिष्ठितं तथा ॥ 15
कृमिकीटयुतं चापि तुषभस्मास्थिसंयुतम् ।
महाज(ना)वरुद्धं च पूजास्थानं विगर्हितम् ॥ 16
शुभामपि सदा भूमिं गोमयेनानुलेपयेत् ।
गोमयंतु नवं ग्राह्यं भूमिस्थं धेनुसंभवम् ॥ 17
वत्सजं शिथिलं शुक्लं कीटदुष्टं तु वर्जयेत् ।
उपलिप्तमथास्त्रेण संसिध्य[च्य?] कलशं त्यजेत् ॥ 18
हस्तं प्रक्षाल्य तोयेन संस्पृशेत् पाणिना पुनः ।
वायुमन्त्रेण संप्रोक्ष्य जलमन्त्रेण मन्त्रवित् ॥ 19
अक्षतं विकिरेत्तस्मिन् मन्त्रेणाष्टाक्षरेणच ।
स्थानशुद्धिर्भवेदेवं पात्रशुद्धि मतः श्रुणु ॥ 20
आम्रकल्पे[ल्के?]न तोयेन हेमं ताम्रंच शोधयेत् ।
राजतं गृहधूमेन शान्ताङ्गारेण वा पुनः ॥ 21

भस्ममिश्रेण तोयेन लोहशुक्तं विशोधयेत् ।
शङ्गशुक्तिमयानांतु लवणेन विशोधनम् ॥ 22

फलपत्रमयानांतु स्वाद्भिरद्भिश्च शोधनम् ।
लेपगन्धापनोदेन शुद्धिर्भवति नान्यथा ॥ 23

गन्धपुष्पयुतं तोयमे कपात्रे प्रपूरयेत् ।
पञ्चमन्त्रैः [न्त्रान्?] क्रमात्तस्मै [स्मिन्?] पञ्चोपनिषदा न्यसेत् ॥ 24

प्रोक्षयेत्तेन सर्वाणि पात्राणि पृथगेव वा ।
अक्षाराकलुषं शुद्धं गन्धपूर्णं रसान्वितम् ॥ 25

अस्पृष्टं दुर्जनै स्तोयमनल्पं सर्वकर्मसु ।
द्रव्यशुद्धिर्भवेत्तेन बेरशुद्धिमतः श्रुणु ॥ 26

लोहपात्रवदेवास्य विशुद्धिर्लोहजस्यतु ।
पूर्णनाच्छादनाच्छुद्धिः शैलस्य तु विधीयते ॥ 27

एवं दारुमयस्यापि मणिजानां तु मार्जनम् ।
एवं विशोद्धय संहृत्य स्पृष्ट्वा शक्रमतः परम् ॥ 28

बेरशुद्धिं विजानीयात् कुशादीनांतु मार्जनम् ।
अन्यैरनुपयोगस्तु सर्वेषां शुद्धिरुत्तमा ॥ 29

सदर्भमासनं कृत्वा पूजास्थानादधःस्थितः ।
दर्भपाणिः पवित्रेण वारि संस्कृत्य शोधयेत् ॥ 30

श्रेष्ठो गन्ध[ः] समुद्दिष्टः कुङ्कुमागरुचन्दनैः ।
प्रदग्ध्वा सहसाविष्टैः श्लक्ष्णैः कर्पूर संयुतैः ॥ 31

कृत्रिमो वा भवेद्गन्धः प्रामाण्यं हरितः शुभः ।
केवलं चन्दनं चापि विष्णोः प्रीतिकरं शुभम् ॥ 32

करवीरावुभौ पद्मौ केतकी जातिमल्लिका ।
उत्पलानि तथा त्रीणि नगरं चम्पकं तथा ॥ 33

द्रोण वानीरशम्याका श्वेतार्क कुटजं तथा ।
कन्दली बकुलं चैव तुलसी नवमाल्लिका ॥ 34

असनस्तबकस्तालं तमालो मरुतः शमी ।
पुन्नागो वंश पुन्नागाः क्षुद्रपुन्नाग एव च ॥ 35

मालती श्वेत कुमुदा देवदारूत्पलद्वयम् ।
कोविदारश्च नागश्च सदा भद्रप्रियङ्गुका ॥ 36

बिल्वं च नवमाला च कन्याहस्तिद्वयं तथा ।
आवीरं कर्णिकारं च वैष्णवी शङ्खपुष्पिका ॥ 37

द्वावशोकौ च कुन्दश्च गन्धपूर्णाङ्कुराणि च ।
शेफालिका कुरवकः पीतकोरण्ड एव च ॥ 38

नन्द्यावर्तद्वयंचापि क्षुद्रकेतक एव च ।
एवं संगृह्य पुष्पाणि पूजयेत्पुरुषोत्तमम् ॥ 39

दिवापुष्पै र्दिवापूजां रात्रिपुष्पैस्तथा निशि ।
आपत्काले यथायोगं पूर्वपूर्वं तु शस्यते ॥ 40

मुक्तपुष्पा वरा माया माया च [यातयामाच?]
सूकरा तथा ।
वर्जितानि विशेषेण तत्रापि परिवर्जयेत् ॥ 41

कोरण्ड कृष्णवर्णं च कापित्थं हरिकार्णिका ।
आज्ञाविभीतकंचै व शिरीषं मदयन्तिका ॥ 42

निर्गुण्डी सिन्धुवारं च किंशुकः शल्मली जपाः ।
अर्कं च कनकोन्मत्तं करञ्जं विषपादपम् ॥ 43

बन्धूकमाधवीनीप मर्जुनं पाटलं तथा ।
चण्डाकोशातकीचैवा लाबू शिग्रुस्तथैव च ॥ 44
एतानि वृक्षवल्लीषु विशेषेण विवर्जयेत् ।
हिट्टं [ छिन्नं ? ] च मुकुलं चापि जीर्णं पर्युषितं तथा ॥ 45
भूमिगं बहुबन्धं च पतितं पात्रवर्जितम् ।
भुक्तशेषं परिम्लान मस्पृश्यस्पृष्टमेव च ॥ 46
पुष्पं विहितमप्येत मापत्कालेऽपि वर्जयेत् ।
पात्रे पुष्पाणि गृह्णीयात् पाणी प्रक्षाल्य वारिणा ॥ 47
विधाय स्थापयेत्पश्चादप्रतापे नरो बुधः ।
यवमुद्ग प्रियङ्गूनां निष्पावं न च कस्य च ॥ 48
दूर्वा भूस्तृणमाषाणां गृह्णीयादङ्कुराणि च ।
आर्द्राणि चाग्रयुक्तानि निर्वृणानि निवेदयेत् ॥ 49
पत्राङ्कुराणि देवाय विपरीतानि वर्जयेत् ।
लामज्जं सर्वमूलेषु प्रशस्तं परमात्मनः ॥ 50
देवदारुकृतं धूपं चन्दनागरुमिश्रितम् ।
न [ आ ? ] दद्यादेवपूजायां विधूमाङ्गार संभवम् ॥ 51
सालं सर्जरसं दण्डं कृत्रिमागरु मिश्रितम् ।
प्राण्यङ्गवर्जमन्यद्वा धूपं पात्रान्निवेदयेत् ॥ 52
गव्येन सर्पिषा दीपं तैलेनापि कृतो [तं? ] न वा [ वम् ?] ।
सूत्रवर्तियुतं दद्यादमुखानलदीपितम् ॥ 53
दुकूलक्षौमनेत्राणि सूक्ष्म कार्पासितानि च ।
नव वस्त्राणि देवाय धूपितानि निवेदयेत् ॥ 54
हेमरत्नमयान्येव दद्यादाभरणानि च ।
न दद्याद्दोषयुक्तानि भुक्तपूर्वाणि वा नृभिः ॥ 55

प्राण्यङ्गतुषभस्मास्थिकाष्ठपाषाणसंयुतान् ।
उच्छिन्न हीनसंस्कारान् तण्डुलान्परिवर्जयेत् ॥ 56

कुन्देन्दु मुक्ता शङ्खाभैः सत्कृतैः शालितण्डुलैः ।
षड्भिः प्रक्षालितैः पक्कं पायसंतु निवेदयेत् । 57

शालि षाष्टिक गोधूम यवमुद्गादिभिः कृतान् ।
अक्षारलवणान् पृष्टान् [पिष्टान्] घृतमृष्टान्निवेदयेत् ॥ 58

वर्जनीयं हविर्भक्ष्यमत्युष्णमतिशीतलम् ।
अपक्कमतिपक्कं च दुष्टपक्कं च सर्वशः ॥ 59

कालपक्कानि सर्वाणि फलानि मधुराणि च ।
कृमिकीटवियुक्तानि पूजाकाले निवेदयेत् ॥ 60

गन्धपर्ण रसोपेतं वस्त्रपूतं नवं घृतम् ।
अग्निकार्ये निवेद्यैव ग्राह्यं गोक्षीरसंभवम् ॥ 61

उपस्तीर्य घृतेनादौ पात्रे कृत्वा हविर्द्विधा ।
अभिघार्य पुनस्तेन निवेद्यमुपसादयेत् ॥ 62

गन्धपुष्पप्रदानेन परिवारस्य पूजनम् ।
अर्घ्यपाद्यनिवेद्यादि देवस्यैव समर्पयेत् ॥ 63

पलाशोदुम्बराश्वत्थ प्लक्षन्यग्रोध सम्भवाः ।
क्षीरवृक्षोद्भवा वापि द्वादशाङ्गुलमात्रकाः ॥ 64

समग्राः पीठमन्त्रैस्तु जुहुयात् समिधो बुधः ।
वक्रा गन्धयुतास्तीक्ष्णा भिन्नाश्च विषवृक्षजाः ॥ 65

सच्छिद्रा स्समिधश्शुष्का जुहुयान्मारणादिषु ।
इध्मस्तु हस्तमात्रं स्यात् परिधिर्बाहुमात्रकः ॥ 66

अद्भिस्तु नित्यधार्यं स्यात् लब्धो वा वैष्णवालयात् ।
एवमेतैः शुभैः द्रव्यैरात्मीयैर्देवमर्चयेत् ॥ 67

उत्तरोत्तर भूयिष्ठाः सप्त जातीः स्मरिष्यति ।
पूर्वं संस्कार हानिश्च न कदाचिद्भविष्यति ॥ 68
ततः पदमवाप्नोति यद्गत्वा नानुशोचति ।
अन्यदीयैस्तु ये द्रव्यै रर्चयन्ति जनार्दनम् ॥ 69
धनार्थं वा यशोऽर्थं वा सतेषां विफलश्रमः ।
पूजाहेतोः प्रयच्छन्ति येकेचित् द्रव्यमात्मनः ॥ 70
पूजासु क्रियमाणासु ते भवन्त्यंशभागिनः ।
तस्मात्सर्वप्रयत्नेन द्रव्यमात्मसमार्जितम् ॥ 71
[1]पूजायां विनियुञ्जीत नापद्यपि परार्जितम् । 72
द्रव्यालाभे तु पूजायां पुष्पैरपि समर्चयेत् ।
पुष्पालाभे तु तोयेन तोयालाभेतु चेतसा ॥ 73
अन्येन वैष्णवेनापि वित्तमोहेतु कारयेत् ।
नतु देव मनाराध्य स्वयं भुञ्जीत बुद्धिमान् ॥ 74
अनर्चयित्वा ये देवं नाश्नन्ति नपिबन्तिच ।
न तेषां दुर्लभं किंचिदिह लोके परत्रच ॥ 75
यत्करोति शुभैर्द्रव्यै र्यत्करोति दिने दिने ।
यत्करोति स्वयं भक्त्या तेन विष्णुः प्रसीदति ॥ 76
एवं द्रव्याणि शुद्धिं च [विधानं तव] पद्मज ! ।
संक्षेपात्कथितं सर्वं किं भूयः कथयामि ते ॥ 77

इति श्रीपाञ्चरात्रे परमसंहितायां
द्रव्यविधानं नाम
पञ्चमोऽध्यायः ।

---

१. अयमर्धः ख. पुस्तके अधिकः ।

श्रीः

# अथ षष्ठोऽध्यायः

ब्रह्मा

मन्त्रकोशं समाचक्ष्व यथावत्परमात्मनः ।
लक्षणं विनियोगस्य फलानि विविधानि च ॥ 1

परमः

हन्त ते कथयिष्यामि मन्त्राणां लक्षणं परम् ।
बीजानि विनियोगं च गुह्यमेतदहं तव ॥ 2

मन्त्रपूर्वाः क्रियास्सर्वाः साधयन्तीप्सितं फलम् ।
मन्त्रैराकृष्यते देवो मन्त्रैरेव विसृज्यते ॥ 3

मन्त्रणादेव मन्त्रास्ते तस्मात्तान् न प्रकाशयेत् ।
न स्वरूपं लिखेत्तेषां लक्षणं न च कीर्तयेत् ॥ 4

आदीपः प्रणवो बीजं सर्वमन्त्रस्य निश्चितम् ।
पामयन्यापि [प्राणयंश्चापि?] सर्वस्य तदेव परमं मतम् ॥5

तेनैव देवमभ्यर्च्य तमेव सततं जपेत् ।
नित्यं प्रणवनिष्ठस्य सिद्धिर्भवति तादृशी ॥ 6

प्रणवान्नाधिको मन्त्रः कश्चिदस्ति पितामह ! ।
ओंकारस्तु त्रिमात्रः स्यान्मकारस्त्वर्धमात्रकः ॥ 7

प्रणवात्तु परं बीजं मन्त्राणां विविधं स्मृतम् ।
बीजात्परो नमस्कार इति सर्वत्र निश्चितः ॥ 8

नमस्कारात्परं विद्धि पराचेति पदं तथा ।
तस्मा.....................श्चित्येव कमलासनात् ॥ 9

१. क. मन्त्राणां देव ।

सत्वयोनी रजोयोनिः तमोयोनीति नाम च ।
चतुर्थ्यन्तं बहुत्वेन परशब्दोऽपि तत्समः ॥ 10

प्रथमैकादशाकारं बिन्दुभिस्सविसर्गकैः ।
ज्येष्ठादीनां तु पञ्चानां पंच बीजानिलेन च ॥ 11

तृतीयपञ्चमाभ्यां च स्वराभ्यां द्वादशेन च ।
चतुर्दश्यां च युक्तेन लकारेनैव पञ्चधा ॥ 12

पञ्चबीजानि तानिस्यु[:] वागीश्वर्यादिषु क्रमात् ।
षष्ठाद्यैः पञ्चभिर्युक्तो मोहिन्यादिषु सस्मृतः ॥ 13

नामधेयस्तु सर्वासां हृष्टादेव[1] [सृष्टावेव?] यथोदितम् ।
मकारो बिन्दुभूतस्तु सर्वभूतेषु पद्मज ! ॥ 14

परेष्ववस्थितो ज्ञेयः शरीरे प्राणवत्सदा ।
दकारस्तु गुणस्योक्तो गुणानां योनिवत्स्मर ॥ 15

बुद्धिबीजं बकारस्तु बुद्धिभेदेष्वतः श्रुणु ।
धर्मादीना मकाराद्यैश्चतुर्भिस्सहितो भवेत् ॥ 16

अधर्माद्येषु विज्ञेयश्चतुर्भिः स.......... भिर्युतः ।
अहंकारो[रे?]मकारस्तु तद्भेदेषु गुणस्वराः[2] ॥ 17

पकारो मनसो बीजं सङ्कल्पस्य च नाम च ।
कालबीजं हकारस्तु दिग्बीजं सविसर्गतः ॥ 18

नकारादीनि पञ्चैव शब्दमात्रादिषु स्मृताः ।
बुद्धीन्द्रियेषु णादीनि तादीन्यन्येन्द्रियेषु च ॥ 19

ॐकारादीनि[3] पञ्चैव भूतबीजानि पद्मज ।
नामधेयानि सर्वेषां सृष्टावेव यथातथम् ॥ 20

१. ख. षष्टादेव । २. क. गणे । ३. क. उ. ।

वासुदेवादिकानां च गुणशक्तिसमन्वयात् ।
बीजानि कल्पयेद्विद्वान् पञ्चरात्रविशारदः ॥ 21

बहिरावरणे तेषां विनियोगः क्रमात्स्मृतः ।
चक्रमन्त्राननो वक्ष्ये चक्रमण्डल कल्पने ॥ 22

अक्षबीजं चकारस्तु चक्रमध्ये व्यवस्थितम् ।
कालबीजं हकारस्तु स्वरैर्द्वादशभिर्युतम् ॥ 23

मेषादि राशिबीजानि विज्ञेयान्यरभूमिषु ।
तिथिबीजानि राशीनां वामदक्षिण योगतः ॥ 24

अनुपूर्वाः स्मृताः शान्ताः शुक्लकृष्णात्मिका मताः ।
आद्यैः स्वकैः क्रमाद्युक्ता बिन्दुन्तैर्वेदनैस्सह ॥ 25

शुक्ले कृष्णे विसर्गान्ता मेषादि क्रम योगतः ।
नक्षत्राणिच कान्तानि रेफादीन्यरमध्यतः ॥ 26

अश्वयुक् प्रभृतीन्याहुः संस्थितानि यथाक्रमम् ।
हाद्या मान्ता गृहा ज्ञेया व्युत्क्रमाद् कृतक्रमाः ॥ 27

स्वराशिषु गृहास्सप्त राहुकेतु स्थितेर्वशात् ।
ह्रस्वाक्षराणि पूर्वाणि श्रीबीजानि.........भा...भिषु ॥ 28

सकारश्च मकारश्च बीजं नेमिद्वयस्य च ।
तत्त्वानामपि बीजानि कीर्तितान्येव सर्वशः ॥ 29

चक्रमन्त्रा इमे प्रोक्ता यथावच्चक्रकल्पने ।
षडङ्गस्यापि बीजानि श्रुणु नामानि च क्रमात् ॥ 30

गुणस्वरैः सहैकारैर्विसर्गेण च बिन्दुना ।
हकारः संयुतो बीजं षडङ्गेषु च कीर्तितम् ॥ 31

हृदयं च शिरश्चैव शिखाकवचमेवच ।
अस्त्रनेत्रं च निर्दिष्टं षडङ्गमिति पद्मज ! ॥ 32

आत्मरक्षासु सर्वत्र पूजारम्भेतु सन्ध्ययोः ।
शयानो भुक्तवांश्चापि षडङ्गं नित्यमाचरेत् ॥ 33

उदक्याञ्जलि मोक्षे च स्थानशुद्धौ च सर्वशः ।
आयुधानां च संस्पर्शे शस्त्रमन्त्रो विधीयते ॥ 34

आत्मनः परिषेके च देवस्यापि प्रदक्षिणे ।
उपस्थाने च सन्ध्यायां दिङ्मन्त्रस्तु विधीयते ॥ 35

जपेन भूतमन्त्राणां भूतानि वशमानयेत् ।
कालमन्त्रं जपन्नित्यं दीर्घमायुरवाप्नुयात् ॥ 36

प्रकृतेस्तु जपन्मन्त्रं स्वःस्थो भवति सर्वदा ।
वासुदेवादिकानां तु मन्त्राणां सततं जपात् । 37

धर्मादि विषया सिद्धिः पुरुषस्योपजायते ।
अष्टाक्षरं जपेन्नित्यं द्वादशाक्षरमेव वा ॥ 38

अन्ते च प्रणवं कृत्वा मुमुक्षुर्नियतेन्द्रियः ।
नान्ततः प्रणवन्यासं फल कामस्य कीर्त्यते ॥ 39

स्वाहाकारं तु होमेषु सर्वत्रान्तेषु योजयेत् ।
क्षीरयावक भैक्षाणि शाकं वा फलमेव वा ॥ 40

भक्षयेत् प्रयतो भूत्वा साधयेन्मन्त्रमीप्सितम् ।
नदीसङ्गम तीर्थेषु पर्वतायतनेषु च ॥ 41

देवतां पूजयित्वादौ मन्त्रानहरहर्जपेत् ।
सहस्रमयुतं लक्षं लक्षाणि द्वादशोत्तमम् ॥ 42

जपेन मन्त्राः सिध्यन्ति होमेन च फलप्रदाः ।
समिदाज्यं फलादीनि पद्मपत्रं हवींषिच ॥ 43

जुहुयात्फलसिध्यर्थं फलकामो दिने दिने ।
महतस्तु महाकालः कालश्चाल्पः कृशस्यतु ॥ 44

कामे सिद्धेतु तत्कामे [ले?] तद्विद्वान् मनसा चरेत् ।
लघुना तु न कालेन देवमावाहयेत्परम् ॥ 45
परपीडा निमित्तं वा वैष्णवः साधयेत्[1] क्वचित् ।
स्वयमेव विनश्यन्ति ह्यापदो विष्णुयाजिनः ॥ 46
सम्पदश्च विवर्धन्ते निष्कामस्यापि सन्ततम् ।
फलमर्थयमानोऽपि कामसङ्कल्पवर्जितः ॥ 47
पूजयित्वा परं देवं तत्फलं लभते ध्रुवम् ।
इदं देहीति सङ्कल्पः पूज्यमानोऽपि यत्नतः ॥ 48
न प्रसीदति गोविन्दः कुर्वन्नपि फलं नृणाम् ।
अथ चेद्वैष्णवस्यापि साध्यकामो हृदि स्थितः ॥ 49
तदा तस्यैव देवस्य परिवारं प्रपूजयेत् ।
द्वादशारं महाचक्रं राज्यहेतोः प्रपूजयेत् ॥ 50
भास्वरं सूर्यसङ्काशं नाभिनेमिपरिष्कृतम् ।
[2]इमित्यस्य भवेद्‍बीजं नाम चास्य सुदर्शनम् ॥ 51
पाञ्चजन्यं महाशङ्खं यशःकामः प्रपूजयेत् ।
शमित्यस्य भवेद्‍बीजं शब्दपूर्णस्य देवताः ॥ 52
शत्रूणां बाधनार्थाय गदामेव प्रपूजयेत् ।
संहरन्तीमिव क्रुद्धा मप्रधृष्यां सुरासुरैः ॥ 53
षडित्यस्य भवेद्‍बीजं स्त्री [रूपा] रुवाचास्य देवता ।
कृत्या दुर्गेति नामानि तस्य एव पितामह ! ॥ 54
धनसञ्चयमन्विच्छन् भक्त्या वैश्रवणं परम् ।
पूजयेत्तस्य [3]किं बीजं तेन सिध्यति तत्फलम् ॥ 55

---

१. अत्र पूर्वपद्यस्थ नञ् अनुवर्त्यते । २. ख. हुमि । ३. ख. कं. ।

विभवान् भोक्तुकामस्तु पूजयेदग्निमन्वहम् ।
गकारं तस्य बीजं तु नक्षत्रं चास्य कृत्तिका ॥ 56

तिथियोगेषु वक्ष्यामि संमानं वा पितामह ।
एतदुद्देशमात्रेण कामबीजानि कानिचित् ॥ 57

दर्शितानि तव ब्रह्मन् साधकानां हिताय च ।
असंख्यत्वाद्धि कामानां विस्तारो नैव शक्यते ॥ 58

वक्तुः श्रोतुश्च तत्त्वेन दिव्यैर्वर्षशतैरपि ।
सर्वे सर्वस्य कामाहि सम्मता एव देहिनः ॥ 59

नान्यः सिध्यति कामेन तस्मात्कामो निरर्थकः ।
तस्मात्सर्वप्रयत्नेन मुक्त्वा काममनोरथम् ॥ 60

भगवन्त मुपासीत सर्वं तेनैव सिध्यति ॥ 61

इति श्रीपाञ्चरात्रे परमसंहितायां
मन्त्रकोशो नाम
षष्ठोऽध्यायः

श्रीः

# अथ सप्तमोऽध्यायः

—:o:—

ब्रह्मा

भगवन् वैष्णवो याग स्त्वया योऽयं प्रकीर्तितः ।
दीक्षितस्यैव नान्यस्य मन्त्रैः कर्तुं न संभवेत् ॥ 1

तत्र दीक्षां समाचक्ष्व वैष्णवानां यथाक्रमम् ।
कस्मिन् देशे भवेद् दीक्षा कस्य वा पुरुषस्य वा ॥ 2

दीक्षायां कीदृशो भेद आचारश्चात्र कीदृशः ।
एतत्सर्वं समाचक्ष्व परं कौतूहलं हि मे ॥ 3

परमः

नदीसङ्गमतीर्थेषु देवतायतनेषु च ।
पर्वताग्रेषु कोष्ठेषु स्थाने वा सुमनोहरे ॥ 4

पूर्वं परीक्षितां भूमिं यागस्थानं प्रकल्पयेत् ।
ब्राह्मणस्य सिता भूमिः क्षत्रियस्यारुणा भवेत् ॥ 5

पीतवर्णा च वैश्यस्य कृष्णा शूद्रस्य कीर्तिता ।
कामेन चापि भागः स्यादाद्या पापप्रणाशिनी ॥ 6

भूमिदाचार्कपरा.......................शत्रुनिबर्हिणी ।
निम्ना प्रागुत्तरे कोणे दिक्षु शेषासु चोन्नता ॥ 7

विस्तीर्णा दुर्जनास्पृष्टा भूमिः स्या च्छुभकर्मणि ।
ज्ञात्वैवमीप्सितां भूमिं कृत्वाग्रे शल्यशोधनम् ॥ 8

प्राणिगतालि भस्मास्तु [प्राण्यङ्ग तुष भस्मास्थि?]
रहितां ता[का?]रयेद्बुधः ।
आर्द्रीकृत्य मृदा भूयो मध्यवेदिं तु कारयेत् ॥ 9

सर्वतः ससमामेव सलिलस्य व्यवस्थया ।
तस्याः सर्वासु दिक्ष्वेव निबद्धां कारयेद्भू[न्वू?]निम् ॥ 10

वेदिमध्यं [1]प्रविश्यन्ति यथा नान्ये बहिः स्थिताः ।
उपर्यपि विना स्तम्भैः कुर्यादावरणं पुनः ॥ 11

न पतन्ति यथा वेद्यां सदा सूर्यस्य रश्मयः ।
द्वारदेशं क्रमात्कृत्वा वह्निकुण्डं चतुर्दिशम् ॥ 12

रसांसि विविधैर्दि[द्रैं?]व्यै र्नानावर्णानि साधयेत् ।
कलशान् विविधांश्चापि पात्राणि विविधानि च ॥ 13

दीक्षार्थिनस्तु यावन्तः संभवन्त्यत्र वैष्णवाः ।
ते सर्वे सममेवाऽत्र प्रयतेरन् समाहिताः ॥ 14

उत्साहे चार्थदाने च कायक्लेशे च योऽधिकः ।
चेष्ट केत [ते क ?] स्य धर्मेण फलं भूयो भविष्यति ॥ 15

आचार्योऽनुग्रहार्यैव यदा शिष्यान् स दीक्षयेत् ।
तदापि सर्व एवैते शुश्रूषेरन् यथाबलम् ॥ 16

तत्रैव कल्पिते स्थाने निच्छिद्रे निरुपद्रवे ।
नगर ग्रामयोर्दूरे सर्वतः परिवारिते ॥ 17

सर्वोपकरणैर्युक्तैः पूजाद्रव्यैश्च संयुते ।
वैष्णवैरभ्यनुज्ञातः [2]कुशलैर्दीक्षितैः पुरा ॥ 18

आदर्शतलसङ्काशे पीतानां स्वर [वितानाम्बर ?] भूषिते ।
पुष्पौषधि फलाढ्यैश्च कलशैर्दिक्षु शोभिते ॥ 19

अदीक्षितजनास्पृष्टे सन्निकृष्ट जल [न ?] स्य च ।
आचार्यः कारयेद्दीक्षां वैष्णवस्य मनस्विनः ॥ 20

---

१. ख. प्रपश्यन्ति । २. ख. कशलै ।

द्वादश्यां पौर्णमास्यां वा विषुवत्ययने पि वा ।
श्रोणायां वा प्रयुञ्जीत दीक्षामस्य यथाविधि ॥ 21

विष्णुभक्तो गृहस्थश्च दीक्षाकर्म विचक्षणः ।
परोपकारनिरतः चक्रलिङ्गधरस्तथा ॥ 22

दीक्षातन्त्र मनाजीवन् केवलं कृत्यवत्सलः ।
यो निवृत्तश्रुतैर्युक्त आचार्यः परिकीर्तितः ॥ 23

ब्राह्मणाः क्षत्रिया वैश्या[1] दीक्षायोग्यास्त्रयः स्मृताः ।
जातिशीलगुणोपेताः शूद्राश्च स्त्रिय एव च ॥ 24

जिज्ञासु [सुं] नास्तिकं क्रूर मधर्मनिरतं शठः [शठम्] ।
अनाश्रितमविद्वांसः [सं] कृतघ्नं नच दीक्षयेत् ॥ 25

डम्भार्थं वर्तते यश्च परीक्षार्थं च दुर्मतिः ।
तस्यापि दीक्षां नाचार्यः कारयेद्वैष्णवीं पराम् ॥ 26

देवपूजाविधिज्ञाने यस्सदा बुद्धिमान् भवेत् ।
तस्य दीक्षां प्रयुञ्जीत धर्म एवं विवर्धते ॥ 27

शिष्येण कल्पितां भूमिमाचार्यः स्वयमादि[वि ?]शेत् ।
संचिन्त्य मनसा देवं दीक्षितैश्च समन्वितः ॥ 28

अक्षारलवणं भुक्त्वा पूर्वेद्युस्सुसमाहिताः [ तः ] ।
प्रातराचम्य तां भूमिं कुर्यान्मानेन सम्मिताम् ॥ 29

द्वादशारत्निमात्रं तु वेदिमानं विधीयते ।
विप्राणां क्षत्रियाणां च षड्भागोनं विशां भवेत् ॥ 30

स्त्रीशूद्रयो स्त्रिभागोनं सूत्रन्यासेन कल्पयेत् ।
वेदे[ दि ? ]द्वादशभागेन मध्यतोऽक्षं प्रकल्पयेत् ॥ 31

---

१. क. योग्या ।

नाभेस्तदेवमानंस्यादरणान् [राणां?] द्विगुणं भवेत् ।
नाभिपद्मे विमानं च विद्या त्संच[स्न?]रणस्य च ॥ 32

मध्यतः शङ्कुमाहत्य समवृत्तं समस्थितम् ।
प्रमाणेष्वङ्कितं सूत्रं पाशितं तत्र योजयेत् ॥ 33

वर्णकैरालिपेत्तत्र सर्वक्षेत्राणि संयुतः ।
सर्वतो वृत्तरूपाणि मानैर्युक्तैर्यथाक्रमम् ॥ 34

अक्षभूमिं त्रिधा कुर्यात् त्रिभिर्वृत्तैस्समात्मकैः ।
कल्प्यते कमलं यत्र मुख्यं द्वादशपत्रकम् ॥ 35

कर्णिका मध्यमे वृत्ते द्वितीये केसराणि च ।
तृतीये तस्य षा[प]त्राणि समानि ललितानि च ॥ 36

मध्ये स्थूलानि सर्वाणि क्रमादग्रे तनूनि च ।
पत्रान्तराणि सर्वत्र समरूपाणि कल्पयेत् ॥ 37

नाभिक्षेत्रं तथा कुर्यात् त्रिभिस्सूत्रैस्समन्वितम् ।
अरक्षेत्रं पुनर्भिन्द्याद्भागै र्द्वादशभिः समैः ॥ 38

अराणि चान्तरं चापि तेषु कुर्या द्यथाक्रमम् ।
तुल्यमेवोभयोर्मानं सर्वदिक्षु विधीयते ॥ 39

अरान्तरे दिशः कुर्या द्विदिश स्वरगोचरम् ।
मूले शिरसि चाराणि स्थूल रूपाणि कल्पयेत् ॥ 40

मध्ये च वृत्तरूपाणि मानस्यार्धेन सर्वतः ।
नेमिक्षेत्रे पुनः कुर्यात् द्वे वृत्ते सर्वतस्समे ॥ 41

अधरोत्तररूपेण प्रथयस्तत्र सम्मताः ।
ता श्चतुर्विंशति ज्ञेया[ः?] सर्व दिक्ष्वनुपूर्वशः ॥ 42

अराग्रमध्ये सर्वेषां प्रधीनां सन्धिकल्पयेत् ।
एतावच्चक्रमाख्यातं समन्तात्परिमण्डलम् ॥ 43

बहिरावरणं चास्य नाभिमानेन कल्पयेत् ।
दीक्षार्थिनां प्रवेशार्थं सर्वतः परिमण्डलम् ॥ 44

तत्र स्थानानि दिक्ष्वेव दिक्पालानां प्रकल्पयेत् ।
चतुरश्राणि सर्वाणि हस्तार्धेन समंततः ॥ 45

वेदेरपि बहिर्वृत्तं निम्न मुन्नतमेव वा ।
हस्तमानेन कुर्वीत दिग्द्वाराणां प्रसिद्धये ॥ 46

द्वाराणि चतुरश्राणि दिङ्मुखेषु प्रकल्पयेत् ।
मध्यत स्सावकाशानि विस्तीर्णानि च पक्षयोः ॥ 47

द्वाराणि चोत्तरादीनि विप्रादीना मनुक्रमात् ।
प्रवेशे निर्गमे वापि दीक्षाया मवधारयेत् ॥ 48

बहिर्वृत्तंतु कुर्वीत पञ्चभिर्मण्डलैर्युतम् ।
महाभूतानि यत्रस्यु राकाशादीनि सर्वतः ॥ 49

एवं सूत्रेण सुमितः कृत्वा चक्रं समंततः ।
वर्णकैरालिखेत् पश्चात्पञ्चभिः कुशलोगुरुः ॥ 50

शुक्लं कृष्णं तथा रक्तं श्यामं पीतं च वाऽयसम् ।
पद्मजं पद्मवर्णांश्च चक्रमण्डललेखने ॥ 51

कर्णिकामालिखेत् पूर्वं पीतवर्णेन सर्वतः ।
रक्तशुक्लापकीर्णानि केसराणि समालिखेत् ॥ 52

पत्राणितु सितेनैव श्यामवर्णं तदन्तरम् ।
शुक्लां रक्तांच कृष्णांच त्रिधा नेमि मथालिखेत् ॥ 53

अराणि पीतवर्णानि तन्मध्यं सितमालिखेत् ।
नेमिक्षेत्रे पृथीनां तु व्यत्ययेन समालिखेत् ॥ 54

शुक्लकृष्णा वुभौ वर्णौ पीतवर्णं तु सन्धिषु ।
एवं चक्रं लिखित्वातु बहिरावरणे पुनः ॥ 55

पुराणि लोकपालानां नानावर्णान्यथालिखेत् ।
बाह्ये तु मण्डले कुर्यात् पञ्चवर्णाननुक्रमात् ॥ 56
कृष्णं पीतं तथा रक्तं श्यामं शुक्लं च पञ्चमम् ।
द्वाराणि रक्तशुक्लाभ्यां ललितानि प्रयोजयेत् ॥ 57
एवमालेखनं कृत्वा चक्रस्य कमलोद्भव ।
समयं ग्राहयेच्छिष्यं वैष्णवानां महात्मनाम् ॥ 58
अत ऊर्ध्वं प्रवक्ष्यामि रजसां पातने विधिम् ।
येन कुर्वन्ति रूपेण रजोभि श्चक्रमण्डलम् ॥ 59
लेखने यस्य वर्णस्य निर्देशः कथितो मया ।
तद्वर्णेनैव रजसा तस्य पूरणमुच्यते ॥ 60
ओषधीभिः शिलाभिश्च पत्रैः काष्ठैस्तथाफलैः ।
रजांसि कारयेद्विद्वान् कुशलैरभ्युपायतः ॥ 61
तेषां मण्डल विन्यासः सर्वस्थानेषु कल्पितः ।
निम्नोन्नतक्षयादीनि कौशलेन समानयेत् ॥ 62
कर्णिकामुच्छ्रितां कुर्यात् यन्त्रबन्धेन केनचित् ।
पत्राणि चान्तरभुवः तथैवाराणिमध्यतः ॥ 63
अन्यत्र समरूपाणि रजांसि विकरेद्बुधः ।
एवं रजोभिरालिख्य चक्रमण्डलमुत्तमम् ॥ 64
दीक्षये दर्थिन शिशष्या नाचार्य स्सुसमाहितः ।
वर्णकैरेव लिखितं कुड्यमध्ये पटेऽपि वा ॥ 65
स्थापयेदैश्वरं चक्र मसमक्षं जनस्यच ।
स्वयं तु काले संपश्ये दनुध्यायन् परं प्रभुम् ॥ 66
प्रमाणं संभवादेव तस्य तत्र विधीयते ।
स्थानानितु समस्तानि नेम्यन्तानि नहापयेत् ॥ 67

एवमुक्तं मया सर्वं तव चक्रस्य लेखनम् ।
यस्यानुध्यानमात्रेण सर्वं मेनोऽवशीर्यते ॥ 68

पिशाचाः पन्नगा यक्षा ग्रहाः प्रेताश्च राक्षसाः ।
अस्यान्तिके न तिष्ठन्ति लिखितस्यापि वेश्मनि ॥ 69

इदं चक्रमुपारूढो वासुदेवो जगत्प्रभुः ।
पूजनीयः प्रयत्नेन वैष्णवैः सिद्धिमीप्सुभिः ॥ 70

इति श्रीपाञ्चरात्रे परमसंहितायां
चक्रोनाम
सप्तमोऽध्यायः

श्रीः

# अथाष्टमोऽध्यायः

## परमः

अत ऊर्ध्वं प्रवक्ष्यामि दीक्षाया लक्षणं परम् ।
यामवाप्य विशुद्धात्मा वैष्णवः सिद्धिमि(मृ?)च्छति ॥ 1
अप्रतिष्ठस्य मनसः श्रेयोमार्ग मविन्दतः ।
उपायं बन्धनस्याहु दीक्षां दीक्षाविशारदाः ॥ 2
सा तु भक्तिवशान्नृणां त्रिषु कर्मसु निष्ठिता ।
प्रथमं समये पश्चात् त्तन्त्रज्ञाने ततोऽर्चने ॥ 3
तीव्रोपेताः[1] प्रयोक्तव्या स्त्रिषु कर्मसु पण्डितैः ।
आनुपूर्व्येण धर्मस्य सर्वकालविवृद्धये ॥ 4
श्रुणुयात् समयं सर्वं कृत्वा समयमग्रतः ।
पुनस्तन्त्र मुपादद्यात् दीक्षितो ग्रन्थदीक्षया ॥ 5
पुनश्च मन्त्रदीक्षायां दीक्षितो देवमर्चयेत् ।
यस्तु तीव्रः प्रयुञ्जीत दीक्षां भक्तिसमन्वितः ॥ 6
तस्य देवप्रसादेन सकलं सिध्यतीप्सितम् ।
आलिख्य वर्णैश्चक्रं परिवार समन्वितम् ॥ 7
दर्शये च्छिष्यमाचार्यः स स्यात्समय दीक्षितः ।
रजोभिश्चक्रमालिख्य पश्चाद्वर्णै र्यथाविधि ॥ 8
दर्शये द्विधिना शिष्यं संभवेत्तन्त्रदीक्षितः ।
अग्नौ हुत्वाऽखिलान्मन्त्रानावाह्य च परं प्रभुम् ॥ 9

---

१. ख. तिस्रोपेताः ।

मण्डलं दर्शये द्यस्तु सतु ज्ञेय उपासकः ।
प्रथमं श्रुणुया त्तन्त्रं द्वितीयं मन्त्रमामनेत् ॥ 10

तृतीयं पूजयेद्देवमित्येवं त्रिविधः क्रमः ।
सामान्येन प्रवक्ष्यामि दीक्षाविधिमतऽपरम् ॥ 11

सर्वसिद्धिकरं ब्रह्मन् श्रुणु त्वं सुसमाहितः ।
दिश मग्रे परिज्ञाय चक्रमालिख्य शास्त्रतः ॥ 12

कलशान् दिक्षु सर्वासु वारिपूर्णान् निधापयेत् ।
वस्त्र संवीतकण्ठांश्च पुष्पाङ्कुरफलान्वितान् ॥ 13

द्वादशाष्टौ चतुष्कं वा वारिमन्त्रेण मन्त्रवित् ।
वितानं व्योममन्त्रेण दत्वा दीपं च तेजसा ॥ 14

चामरं वायुमन्त्रेण छत्रं च क्षितिविद्यया ।
वासुदेवस्य वारि[रु?]ण्यामभिकुद्दं [ ग्निकुण्डं? ]
विधायच ॥ 15

विलाप्य घृत मुत्पूय विपुलं होमसिद्धये ।
क्षालयित्वा च पात्राणि संहृत्य च समित्कुशम् ॥ 16

अरणि ! त्वां मथित्वाग्नि मुत्पाद्य मणिनापिवा ।
श्रद्धधानं विनीतं च शिष्यं तन्त्राणि वास[ च? ]येत् ॥ 17

संहारवर्त्मना चैव संहृत्य प्राङ्मुखः स्वयम् ।
सृष्टिमार्गेण चोत्पाद्य स्थापयेन्निभृतेन्द्रियम् ॥ 18

एतत्सर्वं विधायाग्रे दीक्षाचार्यः ? स्वयं पुनः ।
कृतरक्षः कृतन्यासो बीजन्यासं समाचरेत् ॥ 19

अक्षबीजं न्यसेदक्षे नाभिबीजानि नाभिषु ।
पत्रेषु मूर्तयो योज्याः केसरेषु तु शक्तयः ॥ 20

अरेषु कालबीजानि शक्तिबीजानि[1] बीजनः ।
अग्रेषु मूर्तिपालानां तत्त्वानि पृथिषु क्रमात् ॥ 21
पक्षाणां च तिथीनां च बीजानि क्रमशो न्यसेत् ।
पुराणां दक्षिणे पार्श्वे वामेन विहितानि च ॥ 22
नेमिजे च तथान्येभ्यो दिक्पतीनां च धामसु ।
भूत बीजानि बाह्येषु मण्डलेषु निपात्य च ॥ 23
मण्डलाभ्यन्तरे पद्मे देवमावाहयेत्परम् ।
आवाह्य पूजयेच्चैव मनसा शास्त्रवर्त्मना ॥ 24
पीठस्थं परमात्मानं संचिन्त्यार्घ्यं प्रदाय च ।
लब्धानुज्ञः परिक्रम्य वन्दमानः प्रदक्षिणम् ॥ 25
अग्निकार्यं प्रसिध्यर्थ मग्निकुण्डं समाश्रयेत् ।
हस्तमात्र प्रमाणेन समन्तात्परिमण्डलम् ॥ 26
तत्रोल्लेखादिकं कर्म चक्रवाकावसानिकम् ।
कृत्वोत्थाय परं देवं विधिमार्गेण पूजयेत् ॥ 27
ध्यानेनाञ्जन दानान्तं दत्वादर्पणमाहरेत् ।
पुनरुत्थाय पात्रस्थां [स्थं?] चरोर्भागं तृतीयकम् ॥ 28
निवेद्य भक्ष्य भोज्यादि संगृहीतं निवेदयेत् ।
पुष्पाञ्जलि प्रदानान्त मात्मरक्षां विधाय च ॥ 29
लब्धानुज्ञः परिध्यादि होमकार्यं समाचरेत् ।
अग्निमध्ये च पद्मस्थं देवमावाह्य तेजसा ॥ 30
पूजयित्वा समिद्धोमं कृत्वाऽदाय स्रुवं नवम् ।
पीठमन्त्रैः क्रमाद्धुत्वा धारया सततं स्मृतम् ॥ 31
पक्षं परमहंसेन दर्व्यांतु जुहुयात्पुनः ।
घृताहुतिसहस्रंच तेनैव जुहुयाद्गुरुः ॥ 32

१. ख. मूलानि.

शतकृत्वः पीठमन्त्रैः पञ्चोपनिषदा तथा ।
शक्तिभिर्मूर्तिभिश्चापि मूर्तिपालैश्च शक्तिभिः ॥ 33

दशकृत्वस्तु जुहुया दक्षमन्त्रादिभिर्घृतम् ।
संतर्प्यैवं परिश्रित्य मण्डले शिष्यमाह्वयेत् ॥ 34

त्रिगुणैस्त्रिभिरालभ्धं नाभिहृन्मूर्धसु क्रमात् ।
चरोस्त्रिभागमादाय वह्नेऽपश्चिमतो गुरुः ॥ 35

त्रिगुणे च[न?]समभ्युक्ष्य प्रदद्यात् पुरुषात्मना ।
प्राश्नीयात्स च तत्रैव वाग्यतो वैष्णवं हविः ॥ 36

प्राश्याचम्य यथायोग माचार्य मुपसंश्रयेत् ।
स च तस्मै गुणेनैव प्रदद्याद्दन्तधावनम् ॥ 37

आचान्तस्य प्रदोषेतु रक्षां कालेन कारयेत् ।
कराग्रे योजयेत्सूत्रं त्रिगुणेना भिमन्त्रितम् ॥ 38

वासुदेवेन संस्पृश्य स्वापये द्दर्भसंस्तरे ।
चक्षुषी रूपमन्त्रेण संस्पृश्य स्वप्नसिद्धये ॥ 39

स्वप्नमालोकये त्युक्त्वा स्वयमासीत संयतः ।
दीक्षितै र्बहुभिस्सार्धं कथयन् वैष्णवीं कथाम् ॥ 40

निद्रया तु विनाचार्य स्तां निशामति वाहयेत् ।
अशक्तो विसृजेद्देव मग्नौ मण्डल एव च ॥ 41

प्रभाते च समुत्थाय सुस्नातो मन्त्रविग्रहः ।
कृताधिवासिनं स्त्य [ चक्राधिवासनंत्य ? ] का
पुनरुत्पाद्य मण्डलम् ॥ 42

शिष्यमाहूय संस्कृत्य कृत्वा मन्त्रमयं नवम् ।
हुत्वातु सकलैर्मन्त्रै रानुपूर्व्येण पूर्ववत् ॥ 43

वस्त्रमेक मुपादाय शिष्यं बध्वा मुखान्तरे ।
हस्ते गृहीत्वा प्रविशेत् स्वेन द्वारेण मण्डलम् ॥ 44

नीत्वा प्रदक्षिणं चैव दिक्पालान् प्रणिपातयेत् ।
तत्पुष्पं निपतेत्पुष्पे यस्मिन्नेव यदृच्छया ॥ 45

स मन्त्र स्तस्य रक्षाया मुदये च विधीयते ।
उत्पाद्य चक्षुषी चैनं दर्शये च्चक्रमण्डलम् ॥ 46

तत्त्वानि च विभागेन कथये दानुपूर्वशः ।
तत्त्वरूपमिदं बुध्या[ध्वा]ध्यायस्वेति विनिर्दिशेत् ॥ 47

आत्मानं परया भक्त्या सर्वस्वं च निवेदयेत्।
निवेदयेच्च रत्नानि भूषणान्यम्बराणि च ॥ 48

दापयेत्प्रीतिदानंच ग्राहयेद्वैष्णवं व्रतम् ।
अभ्यनुज्ञां ततो दद्यात् देवपूजन कर्मणि ॥ 49

श्रावये दुपदेशंच रहस्यंच क्रमागतम् ।
एवमेव परेषांच सर्वेषामुपपादयेत् ॥ 50

यदि पश्यति दुःस्वप्नं दुर्निमित्तमथाऽपरे ।
तत्र पञ्चोपनिषदा शतं होमो विधीयते ॥ 51

विद्यान्वयतपोयोगा दाचार्यः शिष्यमाश्रितम् ।
लघुनापि विधानेन दीक्षयेदर्क[चक्र?]मण्डले ॥ 52

शिष्यमुत्सार्य देवेशं मण्डलान्तं विसृज्यच ।
मुक्त्वा(व)च वह्नि मध्यस्थं ततस्सर्वं विशोधयेत् ॥ 53

यं तु शिष्यं गुणोपेत माचार्यं कर्तुमिच्छति ।
तस्याभिषेकं कुर्वीत विधिनानेन मन्त्रवित् ॥ 54

गन्धपुष्पफलक्षीरशालिमाषयवादिभिः ।
रत्न धातु सुवर्णैश्च कुम्भं द्वादश पूरयेत् ॥ 55

नीर्थतोयेन शुद्धेन मूर्तिमन्त्रैर्यथा क्रमम् ।
स्थापये द्थतान् दिक्षु गन्धपुष्पैरलंकृतान् ॥ 56
शिष्यंच प्राङ्मुखं कृत्वा तन्त्रमार्गेण दीक्षितम् ।
श्रद्धधानं विनीतं च विद्यावन्तमलोलुपम् ॥ 57
आचार्यः प्राङ्मुखो भूत्वा देवं पीठगतं प्रभुम् ।
मनसा पूजयित्वातु कार्यमेतं निवेदयेत् ॥ 58
लब्धानुज्ञः पुनः कुर्यादभिषेकं गुरुः स्थितः ।
सृष्टिक्रमेण कलशा न्मन्त्रै रादायमूर्धनि ॥ 59
कृत्वाभिषेकं सर्वैस्तु विधिं [बृसिं?]दद्यात् स्वयं गुरु[1]ः ।
सोऽपि शुद्धाम्बरो भूत्वा तस्यामासीत वाग्यतः ॥ 60
दद्याच्च वैष्णवं चक्रं योगपट्टकमेव च ।
आचार्यो वैष्णवे तन्त्रे त्वं भव प्राणिनां प्रियः ॥ 61
शिष्या स्त्वामुपसर्पन्तु तेषु वर्तस्व शास्त्रतः ।
नार्थलोभेन वर्तेधाः नाशया वा भयेन वा ॥ 62
पञ्चरात्रविशेषेण देवंच सततं स्मरेत् ।
इत्युक्तस्तु समुत्थाय कृत्वा चार्यप्रदक्षिणम् ॥ 63
आसने स्थापयित्वास्य पादौ प्रक्षालयेज्जलैः ।
पादतोयेन चात्मानं शिरसि प्रोक्ष्य भक्तितः ॥ 64
तोषये द्धनदानेन शक्तिभक्तिवशाद्गुरुम् ।
हिरण्यं वाहनं भूमिं वस्त्रं भूषणमेव च ॥ 65
यद्ददात्येषगुरवे तेन तुष्यति देवराट् ।
अथाहं त्वां प्रपन्नोऽस्मि शरीरेण धनेन च ॥ 66

१. क. पुनः ।

इत्युक्त्वा पादयोरस्य प्रणिपातं समाचरेत् ।
स्वस्तिसौम्य विवर्धस्व जीवितेन धनेनच ॥ 67
इत्युक्त्वा तं गुरुश्शिष्यं प्रीतियुक्तो विसर्जयेत् ।
लब्धदीक्षश्च यः शिष्यो वैष्णवे चक्रमण्डले ॥ 68
स तु प्राञ्जलिराचार्यं धनेन परितोषयेत् ।
परितोष्य तु पाणिभ्या मुपसंगृह्य पादयोः ॥ 69
अनुज्ञां देवदेवस्य पूजने प्रार्थयेद्गुरुम् ।
सोऽपि पूजथ देवं त्व मित्यनुज्ञामुदाहरेत् ॥ 70
लब्धानुज्ञश्च शिष्योऽपि ततःप्रभृति मन्त्रवित् ।
पूजयेत्परमं देवमेवं पूजाफलं लभेत् ॥ 71
आचार्येणा ननुज्ञातो यः पूजां कुरुते नरः ।
न तस्य पूजया किंचि द्देवदेवः प्रसीदति ॥ 72
तस्मान्मण्डल मध्यस्थं देवमाचार्यदर्शितम् ।
दृष्ट्वाऽनुज्ञां गुरोः प्राप्य पूजयेत्पुरुषोत्तमम् ॥ 73
एवं यो वैष्णवीं दीक्षां कुर्यात्कारयतेऽपि वा ।
तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये ॥ 74
यः कुर्याद्वैष्णवीं दीक्षां धनलोभेन केवलम् ।
नास्तिकस्य प्रपन्नस्य स गुरुः पातकी भवेत् ॥ 75
अज्ञाना दवमन्येत यस्त्वाचार्य मुपासकम् ।
स तन्त्रपातको ज्ञेयो दीक्षा तस्यतु निष्फला ॥ 76
दीक्षावसाने तत्सर्वं समृद्धेऽम्भसि निक्षिपेत् ।
अन्यत्रवा शुचौ देशे निखनेत् पथि दूरतः ॥ 77
प्रस्तार्य मण्डलं पूर्वं हुत्वा मन्त्रान्यथाक्रमम् ।
हविर्भुक्त्वा गृहीत्वाच दन्तकाष्ठं प्रयुज्यच ॥ 78

१ पा.

चक्राधिवासनं कृत्वा स्वप्नं दृष्ट्वा परेऽहनि ।
उपवासपरो भूत्वा पुनः परतरेऽहनि ॥ 79
लिखित्वा मण्डलं सर्वं जपहोम समन्वितम् ।
प्रविश्यास्तमिते सूर्ये सर्वमेवं विसृज्यच ॥ 80
प्रभातेऽवभृथं गच्छेद्यत्र तीर्थः[र्थं?] परं भवेत् ।
भक्तियुक्तान् विशेषेण ब्राह्मणान् स्वस्ति वाचयेत् ॥ 81
इति कर्म क्रमेणोक्तं दीक्षायां कमलासन ! ।
अनुग्रहाय भक्तानां किं भूयः कथयामि ते ॥ 82

इति श्रीपाञ्चरात्रे परमसंहितायां
दीक्षानाम
अष्टमोऽध्यायः

---

श्रीः

# अथ नवमोऽध्यायः ॥

ब्रह्मा

शुभाना मशुभानां च निमित्तानां जनार्दन ! ।
साधकस्य कथं ज्ञेयं ज्ञायते तं ब्रवीहि मे ॥ 1

परमः

दन्तकाष्ठनिपातेन स्वप्न संदर्शनेन च ।
अग्निरूपैस्तु जानीयात् साधकस्य शुभाशुभम् ॥ 2

न्यग्रोधोदुम्बरोश्वत्थान् प्लक्षान् दर्भांश्च वैणवान् ।
आत्माकरमपाभार्गे मज्जनं धातकीं शमीम् ॥ 3

अन्यानि च पवित्राणि कारयेद्दन्तधावनम् ।
द्वादशाङ्गुलमात्रं तदवक्रं ग्रन्धिवर्जितम् ॥ 4

मूलतो भक्षये द्विद्वान द्भिः प्रक्षाल्य वाग्यतः ।
उत्तरां दिशमैन्द्रींच प्रतीचीं दक्षिणां तथा ॥ 5

पश्यन्तः क्रमशोद्वर्णाः खादेयुर्दन्तधावनम् ।
शोधयित्वा क्रमेणैव तेन दन्तानुपर्ययधः ॥ 6

भञ्जनं मध्यतः कृत्वा जलैः प्रक्षाल्य तत्पुनः ।
बहिरेव क्षिपेद्विद्वान् पतनं तस्य लक्षयेत् ॥ 7

पूर्वाग्रेतु भवेद्वृद्धि राग्नेयाग्रे तपो बलम् ।
दक्षिणाग्रे भवेन्मृत्यु नैर्ऋत्याग्रे धनक्षयः ॥ 8

वारुण्याग्रे पराशान्ति र्वायव्याग्रे रुजागमः ।
उत्तराग्रे धनावाप्ति रैशान्यग्रे परं सुखम् ॥ 9

ऊर्ध्वाग्रेतु स्थिते तस्मिन् महती वृद्धिरिष्यते ।
इत्येतानि निमित्तानि जानीयाद्दन्तधावने ॥ 10

दीक्षाकाले विशेषेण प्रारम्भेषु महत्सु च ।
यदावा मन्यते ज्ञातु मात्मनश्च शुभाशुभम् ॥ 11

तदा कृतोपवासस्तु यथावदुपलक्षयेत् ।
स्वप्नेनापि प्रवक्ष्यामि साधकस्य शुभाशुभम् ॥ 12

स्वप्नं दृष्ट्वा यथारूपं गुरवेतु निवेदयेत् ।
स्वप्नंतु प्रथमे यामे कुर्यात्संवत्सरात् फलम् ॥ 13

अष्टमासात् द्वितीयेतु तृतीये त्रिभिरेव च ।
मासेनैव भवेदन्त्ये प्रभाते त्वरया फलम् ॥ 14

रश्मिमन्तं विवस्वन्तं शशाङ्कं तारकावृतम् ।
प्रदीप्त मग्निहोत्रं च प्रदीप्तं वापि भास्वरम् ॥ 15

मातरं पितरं दारान् पुत्रान् भ्रातॄन् सुहृज्जनान् ।
अपक्वं मानुषं मांसं पादादिप्रतिभक्षणम् ॥ 16

क्षीर सोम सुरा रक्त शर्करा दधि सर्पिषा[षी] ।
सागरस्य च नद्याश्च पानं पायस भक्षणम् ॥ 17

नर नागादि सौधानां शिबिकाफलवृक्षयोः ।
शकटासन शय्यायां सुखेनेवाधिरोहणम् ॥ 18

समुद्र सरिदादीनां तरणं च महाम्भसाम् ।
देवद्विजगुरुप्राज्ञ साधुभिश्च समागमम् ॥ 19

शङ्ख चक्र ध्वजादीनि गन्धर्व नगरं वृषम् ।
छत्र मिन्द्रध्वजं वर्ष मादर्शं रत्न मेवच ॥ 20

चामरं तालवृन्तं च कुम्भं रुधिर मामिषम् ।
पिष्टानुलेपनं माल्यं पुण्यशब्द श्रुतानि च ॥ 21

अगम्यागमनं सर्पं वृश्चिकाद्यैश्च दंशनम् ।
बन्धनं सर्वगात्रेषु बन्धुभिर्धर्षणं तथा ॥ 22

स्वप्नानेवं विधान्दृष्ट्वा विविधानपरानपि ।
अचिरादेव जानीयाच्छुभांवृद्धि मुपस्थिताम् ॥ 23

स्वप्ने तु नग्नमात्मानं वस्त्रहीनं विचेष्टितम् ।
भग्नयानाधिरूढं च भग्नछत्र ध्वजायुधम् ॥ 24

चण्डाल रजकश्वित्री द्युतकर्म्लेच्छ चारणान् ।
पश्येत्पाषण्डिनो यश्च न शुभं तस्य जायते ॥ 25

खरोष्ट्र महिष व्याघ्र वल्मीकारोहणं तथा ।
[1]तैलाभ्यक्तस्तथारुह्य दक्षिणागमनं तथा ॥ 26

रूपकाञ्चन लाभं च पानं च मधुतैलयो: ।
नर्तनं पङ्कदिग्धस्य विवाहकरणं तथा ॥ 27

स्रोतसा [2]हरणं शीघ्रं पक्वमांसस्य भक्षणम् ।
दन्तानां पतनं चैव शिरोमुण्डनमेव च ॥ 28

सलिलोन्मज्जनं दु:खं शुष्क वृक्षाधिरोहणम् ।
स्वप्नातपममङ्गल्यान् दृष्ट्वान्यानपि तादृशान् ॥ 29

न नर:शुभमाप्नोति नात्र कार्या विचारणा ।
यस्तु मध्ये तदा तस्य भक्षयेत् घृतपायसम् ॥ 30

पर्वतस्थश्च यो भूत्वा वृक्षं समधिरोहति ।
प्रासादावस्थितो यश्च समुद्रं तरति स्वयम् ॥ 31

स तु राज्यमवाप्नोति भक्षयन् भूमि मेव च ।
देवब्राह्मण गावश्च लिङ्गिन: पितरो नृपा: ॥ 32

यद्वदन्ति नरं स्वप्ने तथैव च भविष्यति ।
दीक्षायां स्थापने चापि पुरुषेषु महत्सु च ॥ 33

---

१. अयमर्ध: क पुस्तके नास्ति । २. क. भरणं ।

विकारेषु च यत्नेन स्वप्नं समुपलक्षयेत् ।
अग्निकार्ये च यद्यग्नि र्विनायत्नेन दीप्यते ॥ 34
शिखाभिरुज्वलन्तीभिर्वर्तते वा प्रदक्षिणम् ।
हृद्यं वा विसृजेद्गन्धं रूपं वा सुमनोहरम् ॥ 35
सम्पदस्तस्य वर्धन्ते साधकस्य न संशयः ।
यदिहोमार्थ मानीतो नश्ये द्वह्नि रकारणात् ॥ 36
विपदस्तस्य जायन्ते साधकस्य न संशयः ।
विसृजेद्विष्णु लिङ्गं वा दुर्गन्धं वा हुताश[नः]नम् ॥ 37
यदि वा न प्रदीप्येत प्रसव्यं वा न तच्छुभम् ।
मण्डले लिख्यमाने च यदि वर्षं महद्भवेत् ॥ 38
दारुणो वा महान्वायुः परिवेषो रवेस्तथा ।
मरणं बान्धवानां वा देवतानां तथाऽप्रियम् ॥ 39
साधकस्य नतत्रास्ति शुभं किंचित् पितामह ! ।
यदिवा न्यनिमित्तानि शुभानि च महान्ति च ॥ 40
प्रसन्नश्च शिवः कालो वर्धन्ते तस्य सम्पदः ।
स्वयमेवोपतिष्ठेत दुर्लभं यदि साधनम् ॥ 41
देवतायाः प्रसादोवा तन्निमित्तं महत्तरम् ।
प्राप्तानां साधनानांच जायन्ते ष्यापदो यदि ॥ 42
क्षोभो देवकृतोवापि दुर्निमित्तं तदिष्यते ।
एवमेतै र्निमित्तैस्तु साधकः सिद्धिमीप्सितम् ॥ 43
आत्मनः प्रतिबुध्येत शुभं वा यदि वाऽशुभम् ॥ 44

इति श्रीपाञ्चरात्रे परमसंहितायां
निमित्तज्ञानोनाम
नवमोऽध्यायः ॥

श्रीः

# अथ दशमोऽध्यायः

ब्रह्मा

योगमार्गं समाचक्ष्व विस्तरेण जनार्दन ! ।
योगाङ्गानि च सर्वाणि तत्र मे परमा स्पृहा ॥ 1

परमः

ज्ञानानां खलु सर्वेषां योग ज्ञानं विशिष्यते ।
योगज्ञानाद्धिकैवल्यं प्राप्नोति परमं सुखम् ॥ 2

केवलं तु कृतं कर्म योगज्ञानाद्विना नृभिः ।
न कुर्याद्विपुलां सिद्धिं तस्माद्योगं समाश्रयेत ॥ 3

स तु ज्ञान क्रियाभेदाद् द्विविधः शास्त्रचोदितः ।
कर्मणां संविभागाच्च वैरूप्यान्मनसस्तथा ॥ 4

ज्ञानयोगो भवत्येकः कर्मयोगः परःस्मृतः ।
यत्करोति समाधानं चित्तस्य विषये क्वचित् ॥ 5

अनाकुल मसंक्षोभं स योग इति कीर्त्यते ।
यदि कर्माणि बध्नाति चित्तमस्खलितं नरः ॥ 6

कर्मयोगो भवत्येषः सर्वपाप प्रणाशनः ।
यदि तु ज्ञान एवार्थे चित्तं बध्नाति निर्व्यथः ॥ 7

ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरः शुभः ।
उभयोर्योगयोर्यस्य न चित्तं विन्दति व्यथाम् ॥ 8

स तत्पदमवाप्नोति यद्विष्णोः प्रथितं पदम् ।
उभयस्यापि योगस्य देव एव निबन्धनः ॥ 9

ज्ञानेन कर्मणा चापि तच्च कार्यमुपासनम् ।
यमश्च नियमश्चैव कर्मयोगस्य निश्चितम् ॥ 10

वैराग्यं च समाधिश्च ज्ञानयोगस्य उच्यते ।
वागिन्द्रिय मनुक्रोशा दकृत्यकरणात्करम् ॥ 11

अगम्यागमनात् पादं नर्तनोल्लङ्घनादपि ।
निन्द्यनारीसमायोगा ज्जघनेन्द्रियमात्मनः ॥ 12

इच्छामात्रेण चोच्चारा दुःशीलं गुह्यमिन्द्रियम् ।
सङ्कल्पनादनर्थानां मनश्च परिरक्षति ॥ 13

यदयं धार्मिको योगः स यमः परिकीर्तितः ।
व्रतोपवासदानादौ यदेतानि नियच्छति ॥ 14

नियमस्तेन संज्ञेयः कर्मयोगस्य साधनः ।
कर्मयोगेन यत्कर्म कृत्वाऽन्ते कर्म तत्पुनः ॥ 15

अर्घ्यपाद्यादिवद्देयं पादयोः परमात्मनः ।
क्रियमाणानि कर्माणि फलार्थमपि योगवित् ॥ 16

शुश्रूषामेव देवस्य चिन्तयेदतिशङ्कितः ।
ज्ञानयुक्तं च यत्कर्म ज्ञानशून्यं च यद्भवेत् ॥ 17

उभयोरन्तरं दूरादिति तन्त्रस्य निर्णयः ।
मधुरेष्वपि शब्देषु श्रोत्रेन्द्रियमपेक्षते [क्षितम्?] ॥ 18

दर्शनीयेषु रूपेषु तथैव नयनेन्द्रियम् ।
चञ्चलं[त्वक्चलं?] मृदुसंस्पर्शे शुभदं तव [शुभगन्धेच?]
नासिकाम् ॥ 19

जिह्वा माहारसङ्गे च [संकोचे] लोकतन्त्रे मनस्तथा ।
यज्ज्ञानेन निगृह्णाति वैराग्यमितितद्विदुः ॥ 20

स्थिति रव्यभिचारेण ज्ञातव्यं परमात्मनि ।
समाधिरिति विज्ञेयो ज्ञानं योगाङ्गमुत्तमम् ॥ 21

वैराग्येणे न्द्रियाण्यादौ निगृह्य दृढमानसः ।
समं दधीत देवेशे चित्त मेकान्तनिश्चयः ॥ 22

पश्यन्निव समासन्नं प्रणिपत्य स्पृशन्निव ।
वचः शृण्वन्ति वस्तस्त[न्निव स्थ?]स्य चिन्तयेदविशा-
ङ्कितः ॥ 23

योगं समभ्यसे त्तेन देवदेवः प्रसीदति ॥ 24

ब्रह्मा

संसार वासनाविष्टं चित्तं चिरतरं नृणाम् ।
क्षणेन ज्ञानयोगेन निरोद्धुं शक्यते कथम् ॥ 25

निर्मलेऽपि कृते चित्ते ज्ञानयोग समाधिनाम् ।
तस्यावसाने तं भूयः स्वभावं नातिवर्तते ॥ 26

वशीकृतमिवा[मपा?]विद्धं मन्यते चित्तमेकदा ।
तत्पुनः कारणे प्राप्ते मर्यादा मतिवर्तते ॥ 27

परमः

एवमेतद्यथार्थ[त्थ?]त्वं दुष्करं चित्तबन्धनम् ।
अभ्यासेन तु दीर्घेण वैराग्यमुपपादयेत् ॥ 28

ततोऽस्य वासनाः किंचि द्विशीर्यन्ते समंततः ।
वासनासु क्षरन्तीषु समाधिं दृढमाचरेत् ॥ 29

समाधेरपि सामर्थ्यात् सङ्गस्यच विसर्जनात् ।
प्रासादमेत्य वैकुण्ठं स्वकृतं कर्म रक्षति ॥ 30

उपक्रमैर्बहुतरै श्चित्तवृत्तिं शनैःशनैः ।
आनयेद्वश मेकान्ते त्वरया नकदाचन ॥ 31

---

१. क. स्य २. ख. शृण्वन्निव

यत्ऽपुनस्त्वरया चित्तं स्ववशे कर्तुमिच्छति ।
अनर्थास्तं प्रसर्पन्ति व्याधयो वा पृथग्विधाः ॥ 32

विप्रदुष्टं यथानड्वं मृदुपूर्वै रनुक्रमैः ।
सुचिरेण वशंकुर्या त्तथाचित्तं महामनाः ॥ 33

विविक्ते निर्जने देशे निराबाधे मनोरमे ।
आहारैश्च विहारैश्च परिक्लेशविवर्जिते ॥ 34

शीतेनोष्णेन वातेन हिमेनापि न निर्व्यथे ।
पुण्यक्षेत्रे जलाढ्येच सत्त्वमास्थाय निश्चलम् ॥ 35

योगविद्यां समभ्यस्य धारयित्वा विविच्यति[१] ।
शरीरानुपघातेन काले काले समाहितः ॥ 36

जन्मस्थिति विनाशादी नात्मीयानेव चिन्तयेत् ।
तथाचिन्तयतस्तस्य देवं शरणमिच्छतः ॥ 37

योगगत्यभियोगेषु श्रद्धा भक्तिश्च जायते ।
तत्र स्वमेव शिक्षेत्तु चित्तमव्यग्रमानसः ॥ 38

यत्रास्य वासना तीव्रा विषयं तच्च लक्षयेत् ।
कृत्वा विवेकं तत्रैव रागबीजं निवर्तयेत् ॥ 39

योगाभ्यासस्य तद्विद्वान नर्थस्थानमात्मनः ।
अवश्यं तत्रसक्तोऽपि प्रतिबुध्येति निश्चलम् ॥ 40

प्रतिबुध्य[द्ध?]मतिः शून्यं स्थानं यत्नेन संश्रयेत् ।
असंभवादसंयोगादुद्वेगाद्दोषदर्शनात् ॥ 41

वयसऽपरिणामाच्च वैराग्यं विषये भवेत् ॥ 42

ब्रह्मा

एभिस्तं कारणैर्नृणा मुपभोगो निवर्तते ।
रागस्तु मनसः पुंसः कथमेवं निवर्तते ॥ 43

१. क. विविच्यति

इदं मे स्यादिदं मे स्यादित्यस्य हृदि तिष्ठति ।
सङ्कल्पस्थिरमूलश्च तस्योच्छेदः कथं भवेत् ॥ 44

विषयेषूपभुक्तेषु रागो ज्ञानान्निवर्तते ।
अभुक्तेषु च य[यः?]त्स्नेहः सकथं विनिवार्यते ॥ 45

परमः

भोक्तव्या विषयाः पूर्वं धर्मस्याप्यविरोधिनः ।
अलभ्यमपि जानीयात् दर्शन श्रवणादिभिः ॥ 46

तस्य स्वरूपं दुःखं च प्रमादं भयमेव च ।
हृदये वासयेन्नित्यं स्वयमेव समाहितः ॥ 47

योगिनः सबहून् पश्येत्तदर्थेष्वेव विप्लुतान् ।
मा भूव मह मित्येव मिति यत्नेन धारयेत् ॥ 48

सुचिरं योगमभ्यस्य तत्त्वज्ञानसमाधिना ।
अल्पेन कामबीजेन मग्नांस्तमसि लक्षयेत् ॥ 49

एवं वासयतस्तस्य कृतबुद्धेर्विजानतः ।
योगमार्गे भवत्येव प्रत्ययः परमार्थतः ॥ 50

भुक्तान् भोगानिवाभुक्तान् पश्यतोऽपि दिने दिने ।
श्रद्धा भक्ती विवर्धेते देवपादार्चनां प्रति ॥ 51

ततो ध्यानमयेनैव यज्ञेन नियतेन्द्रियः ।
यथोत्साहमुपासीत देवदेव मतन्द्रितः ॥ 52

द्रव्यैर्मनोहरै रेवं पुण्यक्षेत्र मुपागतः ।
अर्चयेत्परमं देवं प्रत्यक्षमिव बुद्धवत् ॥ 53

तत्प्रसादात्कृतं कर्म नास्य किंचिद्विनश्यति ।
न चैन मुपसर्पन्ति विघाता दैवमानुषाः ॥ 54

योगारूढोऽपि पुरुषः स्वचित्तं स्ववशे स्थितम् ।
अन्यदीयमिति ज्ञात्वा न मन्येत वशीकृतम् ॥ 55

प्राकृतानां न वैराग्य मात्मीयं संप्रकाशयेत् ।
यदि शक्नोमि[ति?] वैराग्यं देवस्यैव प्रकाशयेत् ॥ 56

अल मभ्यस्य वैराग्यं कृतबुद्धि रतन्द्रितः ।
समाधिना परं देवं सततं हृदि धारयेत् ॥ 57

यथा रत्ने हिरण्ये वा निवासोऽस्य मनो भवेत् ।
चिरमव्यभिचारेण तथा देवे[वं?] निवेशयेत् ॥ 58

शिक्षयित्वा तथाचित्तं योगवर्त्मन्यवस्थितः ।
देव देव प्रसादेन तमेव प्रतिपद्यते ॥ 59

ब्रह्मा

यश्च कर्ममयो योगो यश्च ज्ञानमयः पृथक् ।
कस्य कोऽतिविशेषेण पुरुषस्य प्रशस्यते ॥ 60

परमः

नरस्याकृतवुद्धेस्तु घटमानस्य सत्पथे ।
कर्मयोगा[ गः प्र ]त्प्रयोक्तव्या[ व्यः ] तस्य ज्ञानं हि दुर्लभम् ॥ 61

यस्तु विद्या विनीतः स्या त्कृतबुद्धिश्च मानवः ।
ज्ञानयोग[ः?] परं तस्य सद्धिकर्मणि सीदति ॥ 62

उभयेनाभियोगेन यस्य संपद्यते मतिः ।
अचिरेणैव कालेन तस्य विष्णुः प्रसीदति ॥ 63

नातऽपरमतं[तः?] किंचि न्नराणां पापनाशनम् ।
विष्णोः प्रियतमं वापि यद्योगे रमते मनः ॥ 64

फलन्ति योमे ......कर्मण्यपि पितामह ! ॥ 65

नोपद्रवाश्च बाध्यन्ते नान्धकारं च गच्छति।
श्रेयसा परमेणैव यद्योजयति मानसः॥ 66
एष योगः समासेन कीर्तितस्ते पितामह!॥ 67
योगाभ्यासेन जानीया दात्मीयां प्रकृतिं नरः।
इन्द्रियाणां स्वभावं च चित्तस्य च गुणागुणान्॥ 68
अरिष्टानां च संप्राप्तिं निमित्तं शकुनादिषु।
देवतानां स्वभावं च कर्मणां गतिमेव च॥ 69
न कार्यं कर्शयेद्योगी नव [ा] यत्नेन पोषयेत्।
न दुःखेऽपि स्मयं कुर्या न्नसुखे मानमूर्जितम्॥ 70
एकान्ते स्थिरमासीत विनीताङ्गो यथा सुखम्।
स्तंभादिकमुपाश्रित्य बन्धनेन नियम्य च॥ 71
अध्यायांश्चि [आत्मानं चि] न्तयेत्तत्र कार्यं च करणानि च।
देवस्य च परां पूजां वैराग्येण परान् गुणान्॥ 72
लोकचिन्ताप्रसुप्तं च मनो नित्यं प्रसादयेत्।
वासानाश्च चिरारूढा यत्नादस्य निवर्तयेत्॥ 73
अभियुञ्जीत यत्नेन प्राणायामान् यथाबलम्।
तेषामेवाभियोगेन योगो[1]ऽस्य भवति ध्रुवम्॥ 74
येन कालेन वहति प्राणः कोष्ठे शरीरिणाम्।
तस्मिन् काले निरोधस्य प्राणायाम इति स्मृतः॥ 75
निरोधस्तु त्रिधा तस्य योगिभिः परिकीर्त्यते।
स्तंभनात् यस्य निच्छिद्रं पूरणा द्रेचनात्तथा॥ 76
त्रिभिरेतैरुपायैस्तु प्राणस्यायाममाचरेत्।
अभ्यासादस्य संरूढा मात्रा भवति भूयसी॥ 77

१ क. योगस्य.

प्राणायामा विवर्धन्ते मात्राभिश्चापि योगिनः ।
यो [या?] विवृद्धिर्भवे त्तस्य पापानां च परीक्षयः ॥ 78
चित्तवृत्तिं वशीकृत्वा प्राणायामकृतोद्यमः ।
भक्तिमान् परमाप्नोति वैष्णवं धाम शाश्वतम् ॥ 79

इति श्रीपाञ्चरात्रे परमसंहितायां
योगो नाम दशमोऽध्यायः

श्रीः

# अथैकादशोऽध्यायः

——:o:——

**ब्रह्मा**

अरिष्ट मिष्टकृत्प्रोक्तं त्वया मे पुरुषोत्तम! ।
ज्ञातव्या यस्य संप्राप्ति योगाभ्यासेन योगिभिः ॥ 1

कथं वा ज्ञायतेऽरिष्टं केन कालेन वा पुनः ।
एतदाचक्ष्व मे देव परं कौतूहलं हि मे ॥ 2

**परमः**

अरिष्टमिति विज्ञेय मपरं तस्य लक्षणम् ।
आत्मस्थं वा परस्थं वा सपक्षेण पितामह ! ॥ 3

प्राणोऽपानस्तथोदानः समानो व्यान एव च ।
एवं पञ्चविधो वायुः शरीरे देहिनः स्मृतः ॥ 4

प्रस्वा [प्रोच्छ्वा] [प्रश्वा] सोऽथ मनोजृम्भः कास [श]
हिक्का क्षुतानि च ।
नित्यमूर्ध्वं प्रवृत्तस्य प्राणवायोर्विचेष्टितम् ॥ 5

निश्वासं च निगारं च शकृन्मूत्र विसर्जनम् ।
अधोगतेरपानस्य चेष्टितं गुह्य कर्म च ॥ 6

व्यानस्तु सर्वं गात्रस्थो *यत्याह ज्वर स्मः ।
बलबृह्मणचेष्टाना मुदानः कारणं भवेत् ॥ 7

समानो जाठरं वह्नि मुद्दीपयति सर्वदा ।
एतेषामेव वायूनामवस्थानैः पृथग्विधैः ॥ 8

---

* अत्र स्खलिता पंक्तिः

स्फुरणानि प्रदेशेषु लक्ष्यन्ते ध्वनयस्तथा ।
गुल्फ कूर्पर गुह्येषु वामपार्श्वे च सन्धिषु ॥ 9
कण्ठे च श्रवणान्ते च शङ्खे मूर्धनि च स्थितम् ।
अन्येषु च प्रदेशेषु स्फुरणान्युपलक्षयेत् ॥ 10
कण्ठस्याभ्यन्तरे घोषे जठरेचाङ्गसन्धिषु ।
जृम्भणानि च सर्वत्र यथावदुपलक्षयेत् ॥ 11
एवमाद्या विकारास्तु वायूनां देहगोचराः ।
प्रसन्ना जीवितं दद्यु रप्रसन्ना स्तनुक्षयम् ॥ 12
नासिकापुटयोः प्राणः पर्यायेण प्रवर्तते ।
संक्रामकालं जानीयात्तस्य सन्ततचारिणः ॥ 13
उत्तरं दक्षिणं विद्या दक्षिणं चोत्तरायणम् ।
मध्यमार्गेतु जानीया द्विषुकालं यथा क्रमम् । 14
तस्य संक्रान्तयो मासा स्तेतु द्वादश वत्सरम् ।
षण्मासं चायनं विद्या त्सूक्ष्मज्ञानेन योगवित् ॥ 15
पञ्च प्रभृति वर्धन्ते पञ्च पञ्च यथा क्रमम् ।
अहोरात्राणि यावन्ति जायन्ते पञ्चविंशतिः ॥ 16
एकैकेन दिनेनैव ततः प्रभृति वर्धनम् ।
त्रयस्त्रिंशद्भवेद्यावदहोरात्राण्यनुक्रमात् ॥ 17
रविमासाद्विनिःसृत्य यदि संक्रान्तिवर्धितम् ।
प्राणा भवन्ति मर्त्यस्य तस्याथ श्रुणुजीवितम् ॥ 18
त्रीणिद्वेवैकमेवाब्दं मासाः संचक्रतुस्तथा ।
द्वौचैकश्चार्धमासश्च ............ ॥ 19
त्रीणि द्वे पुनरेकं च अहोरात्राण्यनुक्रमात् ।
एवमेव विजानीया ज्जीवितस्य न संशयः ॥ 20

संक्रान्तिकालमात्मीय मादावेवोपलक्षयेत् ।
तस्य वृद्धिं विजानीया दरिष्टं समुपस्थितम् ॥ 21
नाडिकामासवर्षाद्यै वृद्धि मस्य तु लक्षयेत् ।
फलानि गणयेत्तेषां विपुलान्युत्तरोत्तरम् ॥ 22
अरिष्टस्यापि गणयेत् कालं पृथगुपस्थितम् ।
पृथगेवोभयं ज्ञेयं नैमित्तिक निमित्तवत् ॥ 23
एकान्ते चिन्तये न्नित्यं सूर्यमासे नरो बुधः ।
नाडीमासदीनान्येषु येष्वरिष्टस्य सङ्गतिः ॥ 24
नातः सूक्ष्मतरं किंचि दायुर्ज्ञानं पितामह ! ।
ह्रासवृद्धिर्यदालोच्य कोष्ठवायोर्विविच्यते ॥ 25
अन्येषामपि वायूनां चेष्टितं यदि नश्यति ।
तेनापि विद्या दासन्न मपरान्तं नरो बुधः ॥ 26
हानि रिन्द्रियशक्तीनां छायाया: परिवर्तनम् ।
दृष्टिमान्द्यं विशेषेण यस्य पुंसः प्रवर्तते ॥ 27
पादाङ्गुष्ठे कराङ्गुष्ठे स्फुरणं तु विनश्यति ।
षण्मासादधिकं तस्य जीवितेनैव शिष्यते ॥ 28
यदितु स्फुरणं नश्ये दधस्तात्कूर्परोपरि ।
त्रिमासाभ्यन्तरे मृत्युः पुंसस्तस्य भविष्यति ॥ 29
मेढ्रे पार्श्वे च कक्षे च नश्यन्ति[ति?] स्फुरणं यदि ।
एकमासेन तस्यापि जीवितक्षयमृच्छति ॥ 30
अर्धमासे स्वकादृष्टिः स्वेदबन्धं न पश्यति ।
जठरान्तर्गतो दोषो दशाहेन विनश्यति ॥ 31
खद्योत सदृशज्योतिर्नेत्रयोः पञ्चभिर्दिने ।
न पश्येद्यदि जिह्वाग्रं त्रियहं तस्य जीवितम् ॥ 32

पालाग्राणि [ज्वाग्राणि] [नासाग्राणि] न पश्येद्यो हेमरण
मचिदिद्वसः [द्व्यहे मरणमृच्छति ]।
कर्णघोषश्च वाक [वाचश्च] प्रमादो मति विभ्रमः ॥ 33
यस्यैतेतु विनश्यन्ति तस्यैकाहं तु जीवितम्।
एवमादीनि चान्यानि निमित्तानि पितामह ! ॥ 34
आमन्येत नरो विद्वान् मृत्युकालस्य लक्षयेत् [णम् ]।
अपरान्तेऽपि चा सन्ने वैष्णवो निर्भयो भवेत् ॥ 35
ना तिलोभं च मन्येत [संप्राप्या?] प्यापदाश्रयम्।
स्वभावात्परिवर्धन्ते कार्याणि करणानि च ॥ 36
वर्षेभ्यो द्वादशेभ्योऽर्वाक् नराणां जीविते सति।
तस्य सूक्ष्मं परिज्ञातुं शक्यते योगिभि र्नृभिः ॥ 37
प्राप्त मालक्ष्य कैवल्य मिन्द्रियोद्यमधातुषु।
ये भवन्त्यकृतज्ञाना वैष्णवाः साधु संयुताः ॥ 38
अरिष्टं विहितं तेषां विशेषेण पराश्रितम्[1]।
नवोदितस्य चन्द्रस्य यो न पश्यति मण्डलम् ॥ 39
क्षीणस्य वा बहिः सूक्ष्मं रेखामयमवस्थितम्।
तथैवारुन्धतीं देवीं ध्रुवमाकाशनिम्नगाः ॥ 40
संवत्सरान्वयेनार्वाक् तस्य मृत्युर्भविष्यति।
अप्रदीप्तौ शशाङ्कार्कौ वह्निं वा दीप्तिवर्जितम् ॥ 41
पश्यन्नेकादशे मासि यमलोकं प्रपद्यते।
यक्षरक्षःपिशाचानां विमानं नगराणि च ॥ 42
यः पश्यति ग्रीष्मकाले दश मासान् स जीवति।
जाम्बूनदमयान्वृक्षान् पर्वतं वा तथाविधम् ॥ 43

१ ख. पराश्रिताम्।

यः पश्यति नरः स्वःस्थो नवमासान् स जीवति।
छर्दितं काञ्चनं रूप्यं रत्नानि विविधानि वा ॥ 44
रक्तमूर्धान मवाक्पश्यन्नष्टमासान् स जीवति।
पांसु भस्मसु पङ्के वा पादन्यासे कृते सति ॥ 45
खण्डितं लक्ष्यते यस्य सप्त मासान् स जीवति।
रक्तः कपोतो काको वा सहसा छायया विना ॥ 46
यस्य रोहति गात्रेषु कृतवासोऽपि वा क्वचित्।
पांसु वर्षं भवेत्पृष्ठे कारणेन विना यदि ॥ 47
षण्मासं जीवितं तस्य नाधिकः कमलोद्भव।
छायापुरुषमालोक्य शिरसा हीनमम्बरे ॥ 48
कबन्धाकृति मन्यं वा प्रत्यक्षं पुरुषं स्थितम्।
कृष्णवर्णं महाघोरं पञ्चमासान् स जीवति ॥ 49
कृष्णवर्णा गता नारी भिन्देद्यस्य यदा शिरः।
मूर्छायां सुप्त [सि] काले वा चातुर्मास्यं स जीवति ॥ 50
नीलवर्णं महाघोरं परं पश्यति राक्षसम्।
पिशाचं वा तथारूपं त्रीन्मासान् स तु जीवति ॥ 51
अनियुक्ते श्मशाने यं सन्ध्याकाले निशाचरेत्[रान्?]।
पश्यति स्वयमेवैको द्वौ मासौ तस्य जीवितम् ॥ 52
बस्तगन्धि भवेन्मूत्रं यस्य रोगैर्विना क्वचित्।
शरीरमेव वा सर्वं पश्येद्वा ब्रह्मराक्षसम् ॥ 53
संप्रेतान्वा विधा पश्ये न्निधनानि महान्ति च।
स्वप्ने सली[लि?]ल मग्नस्य दुःखं वा दारुणं भवेत् ॥ 54
हेतुना विविधाव्यक्तं ब्रूयान्मरण मात्मनः।
अप्रियानपि पश्यन्वा बन्धूनपि हितैषिणः ॥ 55

एकमासावधेरर्वाक् तस्य नश्यति जीवितम् ।
चन्द्रादित्यौ तु यः पश्ये द्रुधिरेणोक्षिताविव ॥

व्योम वा रुधिराभ्यक्तं वर्षमेकं स जीवति ।
दर्पणे सलिले वापि प्रतिबन्धं[बिम्बं] पुरःस्थितम् ॥

यः पश्येद्विकृताकार मङ्गहीन मथापिवा ।
दीपस्य चाप्रशान्तस्य वर्तिदण्डं न जिघ्रति ॥

द्वादशाहेन तस्यापि मृत्यकालो भविष्यति ।
ओष्ठः प्रच्यवते स्थानात् वक्रा भवति नासिका ॥

कर्णश्च चलति स्थानात् षड्रात्रं तस्य जीवितम् ।
यस्य कृष्णा भवे जिह्वा मुखं वा कमलौजसम् ॥

आहारे यस्य विद्वेषो जीविताशाय भूयसी ।
दण्डेन संश्रीकौ [ गण्डौतु निश्रीकौ ] रक्तौ त्रिरात्रेण नश्यति ॥

आपाण्डु नीलपक्षीतु यस्य रोहति मूर्धनि ।
प्रत्यक्षं दर्शने यस्य द्विरात्रं तस्य जीवितम् ॥

अचिरादूदृश्यते यत्र [स्य] दर्पणे सलिलेऽपिवा ।
अहोरात्रेण तस्यापि मृत्युर्भवति निश्चयात् ॥

अरिष्ट कालमासन्न मुपलक्ष्य नरो बुधः ।
समाहितमना भूत्वा सत्वस्थोऽपि गतज्वरः ॥

वैराग्यं परमास्थाय विषादभय वर्जितः ।
संत्यज्य सर्वे कर्माणि मानसं योगमाचरेत् ॥

पुण्यस्थान मनुप्राप्य शान्तात्मा विजितेन्द्रियः ।
सर्वात्मना परं देव मभ्यर्च्य शरणं व्रजेत् ॥

वैष्णवान् योग निष्ठांश्च पूजयित्वा विचार्य च ।
योगमार्गं समातिष्ठेदप्रमत्तः समाहितः ॥ 67

इति श्रीपाञ्चरात्रे परमसंहितायां
अरिष्टोनाम
एकादशोऽध्यायः

---

श्रीः

# अथ द्वादशोऽध्यायः

ब्रह्मा

को धर्मो विष्णुभक्तानां देवदेव ! प्रशस्यते ।
प्रायश्चित्तानि वा कानि धर्मा नैमित्तिकास्तथा ॥ 1

मुक्तिकामस्य के धर्मा भूतिकामस्य के मताः।
एतत्सर्वं समाचक्ष्व तत्र मे संशयो महान् ॥ 2

परमः

कृतेन कर्मणा येन भगवान् भुवनेश्वरः ।
प्रसीदति हितं कर्तुं स धर्मो नात्र संशयः ॥ 3

स पुनस्त्रिविधः प्रोक्तः पूर्वमेव मया तव ।
मनोवाक्कर्म संबन्धा त्तत्र वक्ष्यामि मानसम् ॥ 4

श्रद्धा स्मृ[धृ]तिः प्रसादश्च त्रयस्सर्वास्तु मानसाः ।
एषामेव विभागास्तु सर्वेऽन्ये मानसाः स्मृताः ॥ 5

श्रद्धावान् लभते ज्ञानं श्रद्धावान् साधुसम्मतः ।
श्रद्धावानपि युक्तश्च श्रद्धावान् देवसम्मतः ॥ 6

धृत्या न च्यवते धर्मात् धृत्या दुःखैर्नब[बा]ध्यते ।
धृत्या सुखैर्नमुह्येत धृत्या नोद्वेगमृच्छति ॥ 7

प्रसन्नो बाधते नान्यं प्रसन्नो ना भ्यसूयति ।
प्रसन्नो नार्थलुब्धश्च प्रसन्न स्सततं सुखी ॥ 8

यत्र एते गुणा यस्य स्वभावाद्यत्नतोऽपिवा ।
नित्यं मनसि तिष्ठन्ति देव स्तस्य प्रसीदति ॥ 9

गुणवद्भिस्तु संयोगो गुणानां कारणं भवेत् ।
श्रवणं वा गुणेष्वेषु विश्रुतानां महात्मनाम् ॥ 10
एतेषां विपरीता ये तानधर्मान् प्रचक्षते ।
तेषु प्रसक्ता दुःखानि लभन्ते सर्वजन्मसु ॥ 11
तस्मा त्सर्वप्रयत्नेन सिद्धिकामस्तु वैष्णवः ।
विनयं मनसः कुर्यात् त्रिभि रेभि र्गुणैस्सदा ॥ 12
वशीकृते तु मनसि सर्वमेव वशीकृतम् ।
भविष्यति नरस्तस्मात् साधयेत्प्रथमं मनः ॥ 13
सत्पथे मनसि न्यस्ते वाणी तिष्ठति सत्पथे ।
सङ्कल्पितं हि मनसा प्रकाशयति वाक् पुनः ॥ 14
सत्यं प्रियं हितं चेति वाग्धर्मः स्त्रिविधो भवेत् ।
त्रिष्वेतेषु व्यवस्थाप्य वाचः सिध्यति मानवः ॥ 15
अर्थवार्तासु सर्वासु गुणवार्तासु सर्वतः ।
धर्मवार्तासु चाग्र्यासु सत्यमेवाञ्जसा वदेत् ॥ 16
प्राप्तकाले प्रियंब्रूया द्गुरूणां महतां तथा ।
पण्डितानां शिशूनां च जीर्णानां क्लिश्यतां तथा ॥ 17
आसन्नानां सखीनांच शिष्याणामनुजीविनाम् ।
धार्मिकानां [णां]च भक्तानां हितं ब्रूया द्यथायथम् ॥ 18
वृद्धानां संप्रयोगैश्च पुण्यशास्त्र निषेवणैः ।
अभ्यासेन च दीर्घेण वाणी सन्मार्गमृच्छति ॥ 19
वागिन्द्रिय मजसृक्ता[१] [मसत्सङ्गा]दयत्न विनियोगतः ।
संनिरोद्धुमशक्यं हि तस्मान्मौनं विशिष्यते ॥ 20
लोकतन्त्र प्रवृत्तस्य न मौनं धर्म इष्यते ।
तस्मा द्वाचं सदा रक्षेत् विष्णुभक्तो दृढव्रतः ॥ 21

१. ख. मजस्रत्वा ।

त्रिभिरेतैर्विहीनात्मा वाणी भवति देहिनः ।
अधर्मायै व सा ज्ञेया दुःखव्यसनकारिणी ॥ 22

परिचर्या विशुद्धिश्च परानुग्रह एव च ।
शारीर स्त्रिविधो धर्म स्तेन सिध्यति मानवः ॥ 23

देवस्याराधनार्थाय यत्करोति परिश्रयम् ।
व्रतैश्च द्रव्य यत्नैश्च परिचर्या तु सा स्मृता ॥ 24

व्रतं त्रिषवणस्नान मधःशयनमेव च ।
ब्रह्मचर्यं तथा मौन मक्षार लवणाशनम् ॥ 25

रात्रौ वीरासनं चैव दिवा स्वापन वर्जनम् ।
पुण्यस्थानादि गमन मित्यादि कमलासन ! ॥ 26

पूजा द्रव्याणि देवस्य समाहरति य स्त्वयम् ।
विशोधयति संभ्रान्तः परिचर्याऽपि सा भवेत् ॥ 27

विशुद्धिरात्मनो ज्ञेयं[या?] मलानामपकर्षणम् ।
मलास्तु बह्वः काये तानपास्य विशुध्यति ॥ 28

मूत्र शुक्ल पुरीषाणि श्लेष्मविक्रेय शोणितम् ।
स्वेदोश्रूणि नखाः केशा विस्रवाश्च पृथग्विधाः ॥ 29

अन्तर्गता न दोषाय बहिःस्था दोषहेतवः ।
काले काले मलास्त्वेते सर्वेषां संभवन्ति च ॥ 30

तेषां शुद्धिर्मृदा चैव क्षालनाच्च विशोधनम् ।
मलानां परकीयानां स्पर्शने स्नानमाचरेत् ॥ 31

शाव सूतक संयोगे दुर्मनैश्च समागमे ।
शुक्लमोक्षे वमित्वा च स्नानमेवात्मशोधनम् ॥ 32

आत्मीयानां मलानां च प्रच्युतानां शरीरतः ।
स्पर्शने स्नानमेवोक्तं स्वेद बाष्पादिकं विना ॥ 33

तत्राप्याचमनं कुर्या न्निद्रां कुर्यान्न सर्वदा ।
यानि चात्मशरीरस्य कर्मोपकरणानि वै ॥ 34
अन्य भोगेन दुष्यन्ति तान्यप्यस्य पितामह ! ।
देवोपकरणानां च स्थानादीनां पितामह ! ॥ 35
दोषहेतु र्मनुष्याणा मुपभोग इति स्थितिः ।
पूजायां विनियुक्तं तु यद्द्रव्यमिह पूजकैः ॥ 36
निर्माल्यमिति विज्ञेयं सर्व कार्येषु वर्जितम् ।
हेमरत्नांशुकादीनां स्थानस्याग्नेः स्रुवस्य च ॥ 37
पात्राणां प्रतिमायाश्च शुद्धिः प्रक्षालनाद्भवेत् ।
मलानां क्षालनेनापि शुद्धि र्भवति लौकिकी ॥ 38
देव पूजाथ च स्नानं नित्यशः कार्य[य?] शोधनम् ।
लोकसंव्यवहारेषु धर्मशास्त्रान्तरेषु च ॥ 39
विदि[हि]ताः शुद्धयो ग्राह्याः विष्णुभक्तेन धीमता ।
अतिथीनां गुरूणां च भृत्यानां वापि दुःखिनाम् ॥ 40
महतां धर्म सेतूनां देवतायतनस्य च ।
भिक्षुकाणां पशूनां च वैष्णवानां च भूयसाम् ॥ 41
उत्साहैरर्थदानैश्च यत्नेनोपकरोति यत् ।
परोपकार इत्येषः शारीरो धर्म उत्तमः ॥ 42
गावः पूज्यास्तु तिर्यग्भ्य स्ताभ्योऽपि मनुजास्तथा ।
तेभ्योऽपि ब्राह्मणाः पूज्या भिक्षुभ्योऽपि च योगिनः ॥ 43
योगिभ्योऽपि तथा पूज्या मुक्तिकामाः समाहिताः ।
अन्नदानं परो धर्मो वसुदानं च सर्वशः ॥ 44
शयनासनदानं च वैष्णवेषु यतिष्वपि ।
विद्यादानं विशेष्यन्ते नान्यानि विपुलानि च ॥ 45

भूमिवाहन यानादि वास्त्वैश्वर्यादि सम्पदः ।
दानानि कीर्ति भूयांसि मध्यमानि फलेषु च ॥ 46
अवस्थयापदेशेन पात्रेण श्रद्धयाऽपि च ।
कालेन च धनेनापि फलं विविध मुच्यते ॥ 47
सर्वत्रापि यशोवुद्धि [काम] कार्याश्च निन्दिताः ॥ 47½
श्लाघाच कीर्तनं चापि वैष्णवस्य विशेषतः ।
कामभेदेन दानंतु भूम्यादीनां प्रशस्यते ॥ 48½
आयुरारोग्य पुत्रादि प्रार्थयन्ति तदन्वयात् ।
द्रव्याणि काल देशौच पात्रस्यापि परीक्षयेत् ॥ 49½
परीक्ष्य क्रियमाणेतु सर्वं संपद्यते फलम् ।
यद्वा सर्वाणि देयानि दातव्यानि मनस्विना ॥ 50½
देवदेवं समुद्दिश्य यश स्तत्रा नुषङ्गिकम् ।
शुश्रूषापि परं दानं मुक्तस्य च महात्मनः ॥ 51½
भक्त्या केवलया कृत्वा सिद्धि र्भवति नान्यथा ।
इत्येवं त्रिविधः प्रोक्तो धर्मस्ते कायसंभवः ॥ 52½
प्रवृत्तेरुपसंक्षेपा न्निवृत्तिं तु परां शृणु ।
एतेभ्यो विपरीतो यस्तमधर्मं प्रचक्षते ॥ 53½
अधर्मा द्विनिवृत्तिस्तु मनोवाक् कायकर्मभिः ।
निवृत्तिरूपो धर्मोऽसौ ज्ञेयः पापविनाशनः ॥ 54½
इत्येवं त्रिविधो धर्मो मनोवाक्कायसंभवः ।
कथितस्ते तथा ब्रह्मन् वैष्णवस्य विशेषतः ॥ 55½
जितेन्द्रियस्य विदुष स्त्रिविधो मानसऽपरः ।
प्राकृतस्यापि भक्तस्य कायधर्मः परःस्मृतः ॥ 56½
मध्यमानांतु सर्वेषां वाचिको धर्म उत्तमः ॥ 57

ब्रह्मा

त्रिविधः कथितो धर्मो यस्त्वया पुरुषोत्तम ! ।
तेनैव किं विमुच्यन्ते संसारा द्विषयान्विनाः ॥ 58

परमः

क्रियारूपः स्मृतो धर्मो ज्ञानरूपं च तत्पुनः ।
ज्ञानेन साध्यते मोक्षः क्रिया ज्ञानस्य शोधिनी ॥ 59
ध[क]र्मेणच कृतं ज्ञानं न क्वचित्प्रतिहन्यते ।
तस्यैवतु विधं धर्मं ज्ञानस्य[श्रुणु]पद्मज ! ॥ 60
केवलं खलु विज्ञानं धर्मस्यानुग्रहं विना ।
संसारवासनाविष्टं ना[न]? प्रसीदति किंचन ॥ 61
तस्माद्ध[त्क]र्मेण देवेश माराध्य तदनुग्रहात् ।
अन्तराय मतिक्रम्य सिद्धिं व्रजति वैष्णवः ॥ 62
कर्मणाराधितो देवः पाति जन्मान्तरेष्वपि ।
उपद्रवांश्च नुदति संतनोतिच संपदः ॥ 63
संनिरोद्धुं स्वशक्त्याभिः[तु] शक्यं नैकमपीन्द्रियम् ।
विनादेवप्रसादेन तस्मात्त्वं[त्तं] शरणं व्रज ॥ 64
अमुक्ते[अमुक्तौ?] भेद एव स्यात् जीवस्यच परस्यच ।
मुक्तस्यतु न भेदोऽस्ति भेदहेतोरभावतः ॥ 65
तस्मा द्विमुक्तिमन्विच्छन् विष्णुमेव दिने दिने ।
त्यक्त्वा फलमुपासीत मनोवाक्कायकर्मभिः ॥ 66
ततस्तस्य प्रदाने[सादे]न ज्ञानमस्य विवर्धते ।
क्षीयते ज्ञानवृध्यातु कर्मपूर्वकृतं पुनः ॥ 67
कर्मक्षये विशुद्धात्मा परं निर्वाण[मृ]मिच्छति ॥ 68

इति श्रीपाञ्चरात्रे परमसंहितायां
धर्मो नाम
द्वादशोऽध्यायः

श्रीः

# अथ त्रयोदशोऽध्यायः



ब्रह्मा

निर्वाणमार्गे गहने प्रायेण भुविमानवाः ।
धृत्या परमया स्थातुं न शक्ता इति मे मतिः ॥ 1

अल्पसारा निरुद्योगाः कामक्रोध वशीकृताः ।
निष्कामा नहि देवेशं गच्छन्ति शरणं क्वचित् ॥ 2

अन्येषां गूह्‌मानोऽपि कामोऽस्य हृदये स्थितः ।
प्रकाशएव देवस्य सर्वदा स भविष्यति ॥ 3

तस्मात्सर्वोपकारार्थं काम्ययागा न्विभागशः ।
कथयस्व यथाकालं यथाकामंच सर्वशः ॥ 4

परमः

नराणां विविधाः कामाः सर्वेषां कमलासन ! ।
प्रथमः पुष्टिकृज्ज्ञेयो द्वितीयं परपीडनम् ॥ 5

विद्यया धनयानैश्च पुत्रैः पशुभिरेवच ।
दारैश्च परिवारैश्च यशसा विजयेनच ॥ 6

आरोग्येणच रूपेण स्थानमानादिभिस्तथा ।
संयोगात्पुष्टिमाख्याता पुरुषाणां पितामह ! ॥ 7

मारणं व्याधियोगंच देशादुत्सादनं तथा ।
जयभङ्गोऽर्थनाशश्च तथैवाकर्षणं बलात् ॥ 8

विद्वेषणं विमोहश्च वशीकरणमेवच ।
परपीडनमाख्यान मेवमादि पितामह ॥ 9

पुष्टिंवा परपीडांवा परार्थं नैवकारयेत् ।
संबन्धार्थं धनार्थं वा नागः कर्तुस्तथा भवेत् ॥ 10
आत्मनस्तूपपन्नायां पुष्टौ यत्नं समाचरेत् ।
तत्रापि परिमाणेन सिद्धिर्भवति नान्यथा ॥ 11
अपराधा द्विना त्मानं बाधते यः सदा बलात् ।
तस्य पीडां प्रयुञ्जीत नैवं भवति किल्बिषी ॥ 12
पूर्वपक्षः स्मृतः कालः पुष्टिकामस्य नित्यशः ।
कृष्णपक्षस्तु विज्ञेयः शत्रुपीडासु सर्वतः ॥ 13
तिथीनांतु विभागेन भिद्यते तत्र देवता ।
कामभेदेन तां नित्यं पूजयेत्फलसाधकः ॥ 14
तत्र तां देवता मेषः फलकामः प्रपद्यते ।
तद्विद्या मभियुञ्जीत श्रुणुयास्त[त्त]द्गुणानपि ॥ 15
कल्पयेत्परिवारांश्च तस्या एव यथायथम् ।
रक्षार्थं लोकपालांश्च दिक्षु सर्वासु कल्पयेत् ॥ 16
पद्मंतु केवलं कृत्वा मण्डलस्थं विभास्वरम् ।
अष्टपत्रं क्रमाद्दिक्षु कर्णिकाकेसरोज्वलम् ॥ 17
तत्रस्थां देवतां कृत्वा परिवारैः समावृताम् ।
आयुधैर्वाहनै श्चापि संयुता मर्चयेत् बुधः ॥ 18
देवतानांतु सर्वासां विमानं मण्डलं भवेत् ।
वृत्तंवा चतुरश्रंवा द्वारपालै रधिष्ठितम् ॥ 19
वपुस्तेजोमयं तासां दीप्यमानं समंततः ।
प्रसादं सुखरूपंच पुष्टावन्यत्र भूषणम् ॥ 20
आत्मशुद्धिं क्रमा त्कृत्वा स्थान शुध्यादिकं ततः ।
एकवीर क्रमेणैव देवतामर्चयेद्बुधः ॥ 21

मन्त्राः सर्वे सुसंग्राह्या ये पुरस्तान्मयोदिताः ।
तद्दैवत्यास्तु मन्त्राः स्युः सर्वकार्येषु पद्मज ! ॥ 22

उपचारक्रमस्तुल्यः सर्वासामप्यशेषतः ।
आवाहन विसर्गादि प्रतिमाकल्पनादि च ॥ 23

नाम्ना रूपेण कालेन स्वभावेनच देवताः ।
भिद्यन्ते परिवारैश्च मन्त्रैश्च विविधैस्तथा ॥ 24

ब्रह्मा

कै द्रव्यैः क्रियते यागः कस्मिन् काले च साधकैः ।
देवतानांच को भेदः तदिदानीं ब्रवीहि मे ॥ 25

परमः

प्रतिपत्प्रभृतीनां तु तिथीनामनुपूर्वशः ।
देवतानां यथाकामं यागं वक्ष्यामि तच्छृणु ॥ 26

त्रिशिखस्य त्रिपादस्य सप्तजिह्वस्य पद्मज ।
लोहितस्याष्टबाहोश्च त्रिमूर्ते स्तेजसां निधेः ॥ 27

रक्तैर्गन्धैश्च पुष्पैश्च रक्त स्रग्वस्त्र भूषितः ।
अग्निमध्येतु संपाद्य स्थण्डिले वाऽसनं शुभम् ॥ 28

तेनैव क्रमयोगेन पूजयेज्जातवेदसम् ।
आसनं वाहनं चास्य रक्तमेव प्रकल्पयेत् ॥ 29

आयुधेनैव मन्त्रेण साङ्गोपाङ्गेन साधकः ।
अर्थान् सर्वानवाप्नोति भुङ्क्ते च सततं शुभम् ॥ 30

आग्नेय्यां नच यत्नेन व्रतानि परिपालयेत् ।
न मुखेन धमेदग्निं नाधः कुर्यान्नलङ्घयेत् ॥ 31

अग्नावहुत्वा नाश्नीयान्नचकुर्वीत पादयोः ।
नानुदग्धमनुक्रोशे त्तमेव शरणं व्रजेत् ॥ 32

एवंविधैः शुभैर्द्रव्यैर्ब्रह्माणं पीतविग्रहम्।
चतुर्मुखं विधातारं द्वितीयायां प्रपूजयेत्॥ 33
जायन्ते बहवः पुत्रा वर्धते पशुसन्ततिः।
फलन्ति वृक्षौषधयः साधकस्य न संशयः॥ 34
यक्षराजं तृतीयायां शङ्ख पद्मनिधीश्वरम्।
महोदरं महाकायं भक्त्या वैश्रवणं यजेत्॥ 35
मद्यमांसोपहारैश्च चरुभिर्बलिभिस्तथा।
परिवारैश्च संयुक्तं परिपूर्णं धनेश्वरम्॥ 36
प्राप्नोति विभवान् सर्वानैश्वर्यं चापि गच्छति।
चतुर्थ्यां सितवर्णं तु गणेशं विघ्ननायकम्॥ 37
चतुर्भुजं बृहत्कुक्षि मेकदन्तं गजाननम्।
कन्दमूलफलै र्भक्ष्यै र्भोज्यैश्च विविधैर्बुधः॥ 38
अर्चयेद्विघ्नशान्त्यर्थं काले काले च साधकः।
तस्य विघ्ना न जायन्ते द्यूते च विजयी भवेत्॥ 39
व्यवहारे रणाग्रेच जयस्तस्य भविष्यति।
पञ्चम्यां पद्ममध्यस्थां पद्महस्तां प्रपूजयेत्॥ 40
स्त्रीदेवताभिः सर्वाभिः सेव्यमानां समन्ततः।
पुष्टिरूपां श्रियं देवीं पद्मैः चरुभिरेवच॥ 41
ब्रह्मश्रियै सितैः सर्वै रक्तैराजश्रियं [यै यजेत्] हरेत्।
राजा राज्य मवाप्नोति जयार्थी जयमश्नुते॥ 42
ऐश्वर्य काम स्त्वैश्वर्यं धनार्थी लभते धनम्।
षष्ठ्यां स्कन्दं यजेद्भक्त्या दाडिमी पुष्पसन्निभम्॥ 43
तरुणं शक्तिहस्तंच षण्मुखं कुक्कुटध्वजम्।
मयूरवाहनं चैत्यत्यागिनं बलनायकम्॥ 44

विद्यां मेधां बलं रूपं लभते नात्र संशयः ।
सप्तम्यां तं यजेद्देवं सप्तर्षिं महौजसम् ॥ 45

लोकोपकारनिरत मेकचक्ररथे स्थितम् ।
ग्रहाणामीश्वरं भानुं दीप्तं कवचकुण्डलैः ॥ 46

करवीरैः सरोजैश्च सुरक्तै[1] रक्तविग्रहम् ।
दरिद्रोऽपि भवेदाढ्यो व्याधिनः स्वःस्थतां व्रजेत् ॥ 47

श्वेतरूपं चतुर्बाहु मष्टम्यां रुद्रमर्चयेत् ।
तेजःस्वी बलवा न्वाग्मी निर्विघ्नश्च भविष्यति ॥ 48

नवम्यामम्बिकां दृष्ट्वा रक्तैः पुष्पै स्तथाऽमिषैः ।
नर स्तरति दुर्गाणि लभते च जयश्रियम् ॥ 49

अञ्जनाभं महाकायं दशम्यां यममर्चयेत् ।
अपमृत्युंच तराति निर्जयश्च भविष्यति ॥ 50

एकादश्यां सहस्राक्षं श्वेतरूपं समर्चयेत् ।
आधिपत्य मवाप्नोति विभावानपि पुष्कलान् ॥ 51

द्वादश्यां वासुदेवं तु सितै द्रव्यैः समर्चयेत् ।
वर्धते विभवो नित्य मप्रधृष्यंच[श्च?] शत्रुभिः ॥ 52

कामदेवं त्रयोदश्या मर्चये द्रत्नविग्रहम् ।
पुत्रे दारेषु भृत्येषु सौभाग्यं लभते परम् ॥ 53

अष्टबाहुं चतुर्दश्यां ज्ञानार्थं रुद्रमर्चयेत् ।
निवेद्य पायसं साज्यं लभते ज्ञानमुत्तमम् ॥ 54

अर्चयेत्पञ्चदश्यांतु सोमं संपूर्णमण्डलम् ।
जलपुष्पैः सितैः शुभ्रै र्नीरोगः पुष्टिमान् भवेत् ॥ 55

---

1. क. सुरत्नै ।

तथैव कृत्तिकादीनां नक्षत्राणां च देवताः ।
अर्चिताः स्वानि[नु?] रूपाणि फलानि ददति ध्रुवम् ॥ 56
उक्तो गुग्गुलुना धूपः सर्वेषां घृतमिश्रितम् ।
मुख्य श्चन्दनगन्धश्च कर्पूरागरु संयुतः ॥ 57
पुष्टिकामस्य शस्यन्ते तिथयः पूर्वपक्षजाः ।
कृष्णपक्षस्य तिथयः परपीडासु संमताः ॥ 58
कामरूपाणि सर्वाणि पूजाद्रव्याणि साधकः ।
आत्मनो देवतायाश्च स्वरूपन्यासमेवच ॥ 59
देशं कालंच संभारानुत्साहं सत्वमेवच ।
अनुरूपेषु सर्वेषु कामः सिध्यति नान्यथा ॥ 60
विद्वेषे चाभिचारे च वशीकारेच सर्वदा ।
नामान्यासां [न्यस्य] प्रयुञ्जीत साध्यमानस्य साधकः 61
तस्यान्ते कामरूपंच देवतायै निवेदयेत् ।
मुद्राबन्धांश्च कुर्वीत सर्वयागेषु मन्त्रवित् ॥ 62
आत्मरक्षां च सर्वत्र न भयं तस्य जायते ।
तदेवं संजपेन्मन्त्रं शुचिर्भूत्वा समाहितः ॥ 63
सहस्रमयुतं लक्षमेवं सिद्धि र्भविष्यति ॥ 64

इति श्रीपाञ्चरात्रे परमसंहितायां
काम्ययागो नाम
त्रयोदशोऽध्यायः

---

श्रीः

# अथ चतुर्दशोऽध्यायः

ब्रह्मा

मुद्रेति का त्वया प्रोक्ता यस्या बन्धो विधीयते ।
एष मे वद वैकुण्ठ ! लक्षणेन समन्विताम् ॥ 1

परमः

हिंसकानां मुदं यस्मात् द्रावयन्तीति दर्शिताः ।
तेन मुद्राः स्मृता ब्रह्मन् देवतानां मनोहराः ॥ 2

प्रत्य क्षालन [भिज्ञाच] मुद्राभिः क्रियते देव ! सर्वदा ।
अर्चनेषु विशेषेण तेन मुद्रा महाफलाः ॥ 3

अनुग्रहश्च यत् रूपं देवतायाः प्रकाश्यते ।
सा मुद्रा कथिता ब्रह्मन् देवतागुह्यमुत्तमम् ॥ 4

हृदयं च शिरश्चैव शिखाकवचमेवच ।
अस्त्रनेत्रं च विज्ञेयं सर्वाङ्गं सर्वसम्मतम् ॥ 5

अनामिकामध्यमयो र्निवेद्याङ्गुष्ठ मायतम् ।
कुर्वीत हृदये मुष्टिं मुद्राच हृदये स्मृता ॥ 6

निबध्य मुष्टिमं हन्या दङ्गुष्ठाग्रेण तर्जिनीम् ।
स्थापयित्वा ललाटान्ते मुद्रा शिरस उच्यते ॥ 7

एवं बध्वा दृढां मुष्टिं कुर्यादङ्गुष्ठ मूर्ध्वगम् ।
स्थापयित्वा शिखादेशे शिखामुद्रेय मिष्यते ॥ 8

अन्तः प्रविश्य चाङ्गुष्ठं वेष्टयित्वा समन्ततः ।
संहरे त्तर्जनीं भूयः सा मुद्रा कवचस्य तु ॥ 9

अग्रहस्तं पराहृत्य बध्वा[1] नाराच मुष्टिवत्।
विसृष्ट्वा [विशिष्टान्] तिर्यगानम्य अस्त्रमुद्रेयमुच्यते ॥ 10

स्थापयित्वा भ्रुवोर्मध्ये शिखामुद्रा मथो मुखीम्।
नेत्रमुद्रा प्रयोक्तव्या हस्तः सर्वत्र दक्षिणः॥ 11

षडेताः [कथिता] मुद्राः षडङ्ग न्यासकर्मणि।
आत्मरक्षणमेताभिः क्रियते साधकैः सदा॥ 12

हृदये वा ललाटे वा संपुटाञ्जलि रूर्ध्वगा।
मुद्रेयं कथिता......ज्ञेया प्रणामे परमेष्ठिनः॥ 13

कृत्वाङ्गुष्ठौ समावूर्ध्वौ बध्वा हस्तौ परस्परम्।
योगसंपुट मुद्रेयं स्थाने न्यासेच कथ्यते ॥ 14

तथैव छिद्रवत्कृत्वा न्यस्य मूर्ध न्यथो मुखम्।
अभिषेकं प्रयुञ्जीत न्यासान्ते पावनं परम् ॥ 15

प्रसार्य करजा नूर्ध्वं मणिबन्धौ समुद्यतौ।
अन्तःप्रवेश्य चा ङ्गुष्ठौ पद्ममुद्रां प्रकल्पयेत्॥ 16

आसने पद्मरूपेच सृष्टिचिन्तासु च क्रमात्।
मणिबन्धसमौ हस्तौ तिर्यक् संभ्राम्य चक्रवत्॥ 17

पर्यायेण प्रयोक्तव्या चक्रमुद्रा महोदया।
चक्रकल्पन काले च रक्षार्थं च प्रयुज्यते ॥ 18

मुष्टिं कृत्वा तु हस्ताभ्या मङ्गुष्ठौ विनता वुभौ।
युक्त्वा संभ्राम्य निर्मुक्तौ गदामुद्रेति कीर्त्यते ॥ 19

प्रतीकारे च विघ्नानां भूमिरक्षासु चोत्तमा।
निबध्य दक्षिणाङ्गुष्ठं वामहस्तस्य मुष्टिगम् ॥ 20

1. क. बध्या।

कृत्वाचाङ्गुष्ठ तर्जन्यौ संयुते प्रसूते समे ।
तिस्रस्तु दक्षिणस्यान्या बध्नीयुर्मुष्टि मूर्ध्वतः ॥ 21

शङ्खमुद्रेय मुद्दिष्टा द्रव्याणां स्थापने परम् ।
पद्मं चक्रं गदा शङ्ख मितिमुद्रा चतुष्टयम् ॥ 22

चतुर्ष्वेवा ग्रहस्तेषु देवस्य विनिवेदयेत् ।
धनुषस्तु धनुर्मुष्टिः शरमुष्टिः शरस्यतु ॥ 23

खड्गस्य कु[को]श विश्लेषो मुद्रा खेटस्य मण्डलम् ।
उभे कनिष्टके बध्वा प्रदेशिन्या वुभौ तथा ॥ 24

हस्तावुभौ परावृत्ता वङ्गुष्ठाग्रौ समावधः ।
मध्यमानामिके कुर्यादभितः पत्रयुग्मवत् ॥ 25

प्रोक्ता गरुडमुद्रेयं बध्वा बहु फलावहः ।
गरुड स्थापने मुख्या सर्व सर्पभयेषु च ॥ 26

प्रसार्य करजान् सर्वान् विरलानूर्ध्वगामिनः ।
कृत्वा हस्तस्य चायामं मुद्रानन्तस्य कल्प्यते ॥ 27

शयने बन्ध[ध्य]मानेच आत्मरक्षां करिष्यति ।
मूषिकाणां कृमीणां च सर्वदा विषनाशिनी ॥ 28

कृत्वोत्थाना वुभौ हस्तौ संपुटाग्रौ प्रसारितौ ।
कुर्वीत प्रार्थनामुद्रां सांनिध्यावाहनादिषु ॥ 29

उरसि स्पर्शनं कुर्या दुभयोः स्थानयोर्बुधः ।
श्रीवत्सार्थे दक्षिणतः कौस्तुभार्थे च वामतः ॥ 30

एतदुद्देशतः प्रोक्तं मुद्राणां लक्षणं तव ।
विनियोगश्च पूजायां तत्र तत्र प्रदर्शितः ॥ 31

आनन्त्या ल्लक्षणस्यास्य वक्तुं ब्रह्मन्न शक्यते ।
देवतानां बहुत्वात्तु मुद्रा भिन्ना पृथक् पृथक् ॥ 32

सामान्य मुद्रया तस्मा त्सर्वासां कार्यमर्चनम् ।
नामनी प्रार्थनी चेति मुद्रे द्वे सर्वसम्मते ॥ 33
ताभ्यामे वाङ्गभूतासु देवतासु प्रयोजयेत् ।
अच्युतस्यापि पूजायां तत् द्वे मुख्यस्य कल्पयेत् ॥ 34
मानसं रूप सङ्कल्पं मुद्रां मोक्षार्थिनां विदुः ।
इतरेषांतु हस्ताभ्यां प्रयोगः शस्यते बुधैः ॥ 35
न जातु दर्शयेन्मुद्रां महाजन समागमे ।
गुह्यमेतद्धि मन्त्रेषु तस्मा द्रहसि योजयेत् ॥ 36
न[ना]दीक्षितस्य मुद्राणां लक्षणानि प्रकाशयेत् ।
क्रुध्यन्ति देवतास्तस्य विफलं च कृतं भवेत् ॥ 37

इति श्रीपाञ्चरात्रे परमसंहितायां
मुद्रानाम
चतुर्दशोऽध्यायः

---

श्रीः

# अथ पञ्चदशोऽध्यायः

ब्रह्मा

काम्यकर्मणि सर्वत्र वर्तमानस्य देहिनः ।
सामान्य कल्पमाचक्ष्व येन सिध्यन्ति कामिनः ॥ 1

परमः

सावशेषं मया प्रोक्त मिदं तव पितामह ! ।
अशेषेणतु वक्ष्यामि काम्यकल्पस्य संग्रहम् ॥ 2

आदौ सङ्कल्पये त्काम मेकमेव नरोबुधः ।
जातिशीलानुरूप्येण येन पुष्टः स्वयं भवेत् ॥ 3

संकल्प्य दूरतो गच्छेत् बान्धवानां पुरस्यच ।
आश्रमं च निषेवेत तोयाढ्यं पर्वताश्रयम् ॥ 4

युक्तकेश नखश्मश्रु श्चीरवल्कल संवृतः ।
तीर्थस्नातः स्वकं कामं देवतानां निवेदयेत् ॥ 5

कल्पयित्वा कुटीमेकां स्वयमेव समाश्रयेत् ।
अशक्तः कारयेदन्यैः सर्वार्थं वासमाविशेत् ॥ 6

एकमासा[1]वमं कालं तत्र संवत्सरावधिः ।
कुर्वीत कामसिध्यर्थं पुरश्चरणमादितः ॥ 7

शरीरमन्त्र संस्कारः पुरश्चरण मिष्यते ।
नतु तेन विनाकामः तापसस्यापि सिद्ध्यति ॥ 8

वन्यशाखैः स्वयंपक्वैः कुर्वीत प्राणधारणम् ।
कन्दमूलफलैश्चैव कालपक्वैश्च शक्तितः ॥ 9

---

१. क. सादिकं ।

प्रातः स्नात्वा शुचौ देशे पूजये न्मन्त्रदेवताम् ।
जपकाले जपे न्मन्त्रं न क्षिप्रं न विलम्बितम् ॥ 10

सहस्रं शतवारं वा यावदुत्साहमेववा ।
देवताभिमुखो भूत्वा वाग्यतः[1] संयतेन्द्रियः[2] ॥ 11

आवृत्ति गणनां कुर्वन् जपेदवहिताशनः[3] ।
प्राप्ते मध्यं दिने काले विधिवत् स्नानमाचरेत् ॥ 12

स्नात्वाचाम्य निवेद्यार्घ्यं तस्मान्मन्त्रं जपेत्पुनः ।
अर्घ्यं दत्वाऽपराह्णेतु वियुजे न्मन्त्रदेवताः ॥ 13

पुनः स्नातः कृताहारः सन्ध्यामाराध्य संविशेत् ।
एवमेव परेद्युश्च कर्म कुर्वीत साधकः ॥ 14

उच्चारार्थं बहि र्गत्वा स्नानं नियत माचरेत् ।
जपं नियम पूर्वंतु मन्त्रं तु प्रयतोत्तरम् ॥ 15

द्वादशैव सहस्राणि महामन्त्रं जपेद्[बु]धः ।
सुदर्शनं नृसिंह्मंच वाराहमपराजितम् ॥ 16

द्वादशाक्षरतो हीनं जपे दक्षर लक्षकम् ।
प्रधाना दङ्गमन्त्रेषु देशस्तु दश भागि[वि] कः ॥ 17

एक बीजेषु मन्त्रेषु तेनैवाङ्गानि कल्पयेत् ।
कार्यं सकलमुक्तै[व]व मालामन्त्रः समाप्यते ॥ 18

आद्यन्तयोस्तु प्रणवं कुर्यान्मन्त्रस्य सिद्धये ।
सिद्धे मन्त्रे यथा न्यायं होमे स्वाहान्त माचरेत् ॥ 19

घृतेन वा समिद्भि र्वा फलै र्वा होम मिष्यते ।
नियतं मन्त्रसिद्ध्यर्थं दशवारावमं बुधः ॥ 20

---

१. क. वश्यतः । २. ख. संयतेन्द्रितः ३. ख. तासनः ।

अशक्त स्तु जपन्नेव मानसं होममाचरेत् ।
होमान्नमेव कुर्वीत नित्यं मन्त्रं जपन्बुधः ॥ 21

निर्मथ्य चाग्निं होमार्थ मविनाशेन धारयेत् ।
तस्मिन्विनष्टे भूयोऽपि मन्थनेनैव धारयेत् ॥ 22

जप्यमाने महामन्त्रे भयं कुर्वन्ति देवताः ।
घोररूपं महानादं न तत्र व्याकुली भवेत् ॥ 23

अनाकुलम संभ्रान्तं वञ्चयन्ति च देवताः ।
विलोभन मुपस्थाप्य नारीरत्न सुखादिकम् ॥ 24

अन्याः कारणवादेन स्वप्ने बन्धुजना इव ।
साधकस्य दृढां बुद्धिं मन्दीकुर्वन्ति देवताः ॥ 25

यो नगच्छति संमोहं साधक स्तत्र बुद्धिमान् ।
तस्य सिध्यन्ति सङ्कल्पा येऽस्य नित्यं मनोगताः ॥ 26

अजस्रं कुर्वतां कर्म धीराणां व्यवसायिनाम् ।
सिध्यन्ति विविधाः कामा नेतरेषां पितामह ! ॥ 27

सहायेन विना धीरः साधयेत्काम्य[र्यं]मीप्सितम् ।
कुर्यात्सहायमक्लिष्ट मशक्तो [क्ते] नेतरः [रे] कश्चित् ॥ 28

सिद्धे मन्त्रे प्रयुञ्जीत होमं कार्यस्य सिद्धये ।
याव दश सहस्राणि जुहुया त्तावदाहुतीः ॥ 29

ततो भूयोऽथ जुहुयात् सङ्कल्पस्य तु गौरवात् ।
श्वेतपद्मांस्तु जुहुया दिच्छन् ब्रह्मश्रियं नरः ॥ 30

रक्त पद्मानि जुहुया द्य इच्छति नृपश्रियम् ।
अश्वत्थसमिधा होमं राज्यकामः समाचरेत् ॥ 31

दूर्वां घृताक्तां जुहुया द्य इच्छेद्दृद्धिमायुषः ।
कन्याकामः कालपक्वां भूमिकामस्तु मृत्तिकाम् ॥ 32

स्थानकामस्तु जुहुया न्न्यग्रोधसमिधो नरः।
औदम्बरीस्तु जुहुया त्समिधः सर्वशान्तये ॥ 33
पायसं पुत्रकामस्तु जुहुया द्वश्यकर्मणि।
अपामार्गैतु जुहुयात् गवेषु [ महत्सु ] व्यसनेषु च ॥ 34
विद्याकामस्तु जुहुयात् पालाशीः समीधो बुधः।
अन्नमन्नाद्य कामस्तु ज्ञानकामो नवं घृतम् ॥ 35
बिल्व मैश्वर्यकामस्तु तिलान् रोगस्य शान्तये।
रुधिराक्तास्तु जुहुया त्समिधः कण्टकान्विताः ॥ 36
शत्रू नुत्सादय[ने] त्स[ स ]न्धौ सर्वपापान् रुषान्वितः।
माषचूर्ण प्रतिकृतिं हुत्वा कृत्वा पदादितः ॥ 37
छत्रेण जुहुया च्छत्रो रभिचाराय साधकः।
विद्वेषमिच्छन् लवणं जुहुया त्तिलसंयुतम् ॥ 38
सुवर्णकामो जुहुया न्निम्बपुष्पाणि साधकः ॥ 39
वर्षकामस्तु जुहुयात् समिधो वेतसस्यतु।
स्वाहाकारस्तु होमेषु मन्त्रान्ते नियतः स्मृतः ॥ 40
हुंकार फट्कार युतं परपीडासु सम्मतम्।
तां ता मवस्थां साध्यस्य चिन्तये त्सर्वकर्मसु ॥ 41
वशीकारे वशीभूतं विद्वेषे द्वेषमागतम्।
[1]परपीडासु सर्वासु कुर्याच्छान्तिं कृतात्मनः ॥ 42
अन्यथा सुमहान् दोषो विष्णुधर्मेषु दर्शितः।
प्रयुज्य कर्म[2] कामार्थं प्रतिलभ्यच तत्फलम् ॥ 43
पुनः कामस्य सिद्ध्यर्थं प्रयतेत विचक्षणः।
निर्वेदं च त्वरां चापि काम्यकर्मणि वर्जयेत् ॥ 44

---

१. ख. भर्तृपीडासु। २. ख. धर्म।

वाङ्मनोभिः क्षये सिद्धि रन्यथा जीविते क्षयः ।
तस्मादात्महितं काममेकमुद्दिश्य पुष्कलम् ॥ 45
काम्यकर्माणि कुर्वीत नालमल्पं महामतिः ॥ 46

इति श्रीपाञ्चरात्रे परमसंहितायां
काम्यो नाम
पञ्चदशोऽध्यायः

---

श्रीः

# अथ षोडशोऽध्यायः

परमः

कामसिद्धिकरा न्मन्त्रान् कांश्चि द्वक्ष्यामि पद्मज ! ।
शृणु ता न्प्रणिधानेन महावीर्या न्महाबलान् ॥ 1

वाराहं नारसिह्मंच श्रीकरंच सुदर्शनम् ।
एतच्चतुष्टयं प्राहुः श्रेष्ठं मन्त्रेषु वैष्णवाः ॥ 2

अचिरादेव सिध्यन्ति मन्त्राह्येते महोद्याः ।
अन्येतु चिरकालेन तस्मात्तेषां प्रधानता ॥ 3

अक्षराणि त्रयस्त्रिंश द्वाराहस्य पितामह ! ।
भूमिकामो विशेषेण मन्त्र मेत त्प्रसाधयेत् ॥ 4

स्थानं वैष्णव मासाद्य पूजयित्वा च तं प्रभुम् ।
ध्यात्वा वराहरूपेण मन्त्र मावर्तयेदिमम् 5

द्वादशैव सहस्राणि मन्त्रसिद्धि स्तथा भवेत् ।
पुनस्स यावतीं भूमिं मनसा लब्धु मिच्छति ॥ 6

तस्याः संनिहितां भूमि मासाद्य सततं जपेत् ।
लक्षमर्धं चतुर्भागं त्रिभागं च यथा तथम् ॥ 7

यावज्जपति ताव त्सा लभ्यते नात्र संशयः ।
चतुःशताक्षरो मन्त्रो नारसिह्म इति स्मृतः ॥ 8

अमोघश्चाप्रधृष्यश्च महावीर्यो महोद्यः ।
पाताल विषया सिद्धि स्तेन सर्वातु लभ्यते ॥ 9

सिद्धि[द्धिः] द्रव्यं रसो वा पि भूमिः स्वर्गो रसायनम् ।
रथेनार्थसमृद्धिः स्यात् सिद्धद्रव्येण सिद्धिमान् ॥ 10

रसायनेन दीर्घायुः भू(?)मिः स्वर्गेण निर्वृतिः ।
पश्चिमद्वारमाश्रित्य देव देवस्य मन्दिरम् ॥ 11
द्वादशैव सहस्राणि मन्त्रमावर्तयेदिमम् ।
पुरश्चरणसिध्यर्थं ततो बिलमुखं व्रजेत् ॥ 12
तत्रापि विधिना तिष्ठन् मन्त्रमेत त्सदा जपेत् ।
सहस्रवार मावृत्य प्रविवेशाविशंकितः ॥ 13
यस्तु प्रवेशनं नेच्छेत् पातालं साधकः क्वचित् ।
स बिलस्य समीपस्थो मन्त्रस्य जपमाचरेत् ॥ 14
कृतेतु जपबाहुल्ये भीताः पाताल वासिनः ।
कुर्वन्ति बहुधा विघ्नं साधकस्य समंततः ॥ 15
तेतु निश्चलचित्तस्य ज्ञाति[तु?]कामा मनोरथान् ।
आगत्यागत्य पृच्छन्ति तत्र कार्यं यथारुचि ॥ 16
तैरुपानीत मादाय काममस्य हृदि स्थितम् । 17
स्वदेशे वा सुखं जीवेत् यत्र कुत्र यथा सुखम् ।
श्रीकरस्यापि यो मन्त्र स्तमष्टाक्षरकं विदुः ॥ 18
सर्वकामानवाप्नोति यस्याभ्यासेन साधकः ।
वैष्णवं स्थान मासाद्य विविक्तं सुमनोरमम् ॥ 19
भगवन्तं समाराध्य जपेन्मन्त्र मनारतम् ।
ध्रुवं पञ्च सहस्राणि तत ऊर्ध्वं यथारुचि ॥ 20
एवं जपेत् द्वादशाहं पुरश्चरणसिद्धये ।
आयुष्कामो घृताभ्यक्ता न्दूर्वांस्तु जुहुयान्नव ॥ 21
आहुतीरयुतं हुत्वा हुतशेषेण सर्पिषा ।
चरून् प्राश्य विशुद्धात्मा दद्याद्विप्राय काञ्चनम् ॥ 22

१. क. सर्वदा.

अपमृत्यू नतिक्रम्य शतवर्षाणि जीवति।
सूत्रेण ग्रथितं चक्रं मन्त्रेणामृश्य[1] धारयेत् ॥ 23

सर्वेभ्य एव सत्वेभ्यो रक्षा भवति निश्चला।
आहवे सुमनाः पुष्पै मन्त्रेणानेन मन्त्रयेत् ॥ 24

मु[सु]खं ग्रह गृहीतस्य सतु शीघ्रं विमुञ्चति।
वीरक्रयेण विक्रीय शतपुष्पं सहस्रशः ॥ 25

जुहुयान्मधुरैस्तां [स्तावत्] तत् दरिद्रः सकुलं भवेत्।
ऊर्ध्वबाहुर्जपे[भैव] न्नित्यमादित्याभिमुखो जपेत् ॥ 26

अविच्छिन्नं भवत्यस्य नित्य मन्नाद्य मास्पदे।
श्मशानभस्म जुहुयात् वासरा ण्येकविंशतिः ॥ 27

बुध्या शत्रु मनुस्मृत्य तमुत्सादयति ध्रुवम्।
आसुरीपिष्ट कल्केन विष्णुमालिख्य[प्य] सर्वतः[2] ॥ 28

तन्त्रेणामृश्य बहुशः शत्रुस्तु ज्वरवान् भवेत्।
गव्येन पयसा देवं स्नापयित्वा विमोचयेत् ॥ 29

गोमयेन स्थितित्वेन कृत्वा प्रतिकृतिं द्विषः।
पादेनाक्रम्य हृदये जपन्मन्त्रं निहन्ति तम् ॥ 30

त्रिधा स्थण्डिल मालिप्य दिक्षु कुम्भा न्निधापयेत्।
एकविंशतिकृत्वस्तु मन्त्रयित्वा पृथक् पृथक् ॥ 31

मध्ये देवेश माराध्य पयसा तान्[3] प्रपूरयेत्।
मन्त्रेण पूजयित्वा तु स्नापयित्वा [येच्छ्री] मृ [ऋ] तुदये ॥ 32

दीर्घायुष्य मवाप्नोति सा पुत्र मविशङ्कितम्।
वन्ध्याऽपि लभते पुत्रं स्त्रीः प्रयोगा न्न संशयः ॥ 33

शतवार मिमं मन्त्रं नित्यं जपति यो नरः।
न विघातोऽस्य कार्येषु भयं वा जायते क्वचित् ॥ 34

---

१. क. मन्त्रेणावृत्य। २. ख. सर्पतः। ३. क. तं प्रपूजयेत्।

मृत्युस्थानेषु दुर्गेषु भये वा प्रत्युपस्थिते ।
इम मावर्तये न्मन्त्रं नावसीदति साधकः ॥ 35

रिक्तोऽपि सर्वतो मर्त्यो मन्त्र मावर्तय न्निमम् ।
उद्योग मन्तरेणापि लभते सिद्धिमीप्सिताम् ॥ 36

सुदर्शनस्य मन्त्रस्य कथयन्त्य क्षराणि षट्[1] ।
ऐश्वर्य मीप्सितं सर्वं तस्याभ्यासेन सिध्यति ॥ 37

राज्यकामः समावर्त्य पर्वताग्रं जलान्वितम् ।
षडक्षरं जपे न्मन्त्रं पूर्वसेवा भवेदियम् ॥ 38

पद्मानि जुहुया दग्नौ नित्यं बिल्वेन वा नरः ।
अयुतं नियुतं वा पि ततः श्री रुपसर्पति ॥ 39

अशक्तस्तु जपे देतत् दीर्घकालमतन्द्रितः ।
देवं सततमाराध्य राज्यमस्य भविष्यति ॥ 40

शत्रुभि र्वध्यमानस्तु वैष्णवो जुहुया त्सदा ।
विभीतकसमिद्भिस्तु शत्रुपक्षोऽस्य शीर्यते ॥ 41

शात्रवान् जेतुकामश्च जुहुया त्साधकः स्वयम् ।
सहस्रपरमेतेन शत्रुं जयति निर्भयः ॥ 42

षडक्षरं द्वादशारं वाचं कृत्वा जपेदिमम् ।
सौवर्णमथवा ताम्रं निहितं सर्वतः शुभम् ॥ 43

उपरि स्थापये द्गेहे नित्य माराधयेच्च तम् ।
जपेच्च सततं मन्त्रं नास्य किंचि द्भयं भवेत् ॥ 44

जपे त्सुदर्शनं मन्त्रं नास्य किंचि द्भयं भवेत् ।
जपे त्सुदर्शनं मन्त्रं सततं यो महामतिः ॥ 45

तं सिह्यमिव मन्यन्ते प्रक्षीणमपि शात्रवः ।
चक्रस्य नाभिमध्यस्थ मात्मानं भावयन् जपेत् ॥ 46

१. क. च ।

केवलोऽपि न सङ्ग्रामे पराजय मवाप्नुयात् ।
धारयन् पाणिना चक्रं भ्रामयन् सततं जपेत् ॥ 47
तस्यां दिशि मुखं कृत्वा शत्रुसेना निवर्तते ।
प्राप्ते जनपदव्याधौ राक्षसै र्वा भयेकृते ॥ 48
अपामार्ग समिद्धोमात् सर्वं समुपशाम्यति ।
चक्रमध्यस्थ मात्मानं ध्यात्वा पश्ये द्रुहार्दितः ॥ 49
अमर्षेण जपे न्मन्त्रं सशीघ्र मभिसर्पति ।
योऽसावष्टाक्षरो मन्त्रः प्रोक्तो नारायणाश्रयः ॥ 50
अचिन्त्याः सिद्धय स्तेन साध्यन्ते साधकोत्तमैः ।
अष्टाक्षरं जपेन्मन्त्रं पूर्वसेवा भवेदियम् ॥ 51
ततस्तु वैष्णवःस्वान्ते नित्यं मौनयुतो जपेत् ।
संवत्सरजपादेव साधको नियतेन्द्रियः ॥ 52
निष्कामो देवदेवस्य लभते रूपदर्शनम् ।
यां देवता मनुध्याय धीमा न्मन्त्र मिदं जपेत् ॥ 53
षण्मासादेव तस्याश्च रूपं पश्यति चक्षुषा ।
चातुर्मास्यजपादेव स्वरूपं पश्यति श्रियः ॥ 54
यक्षाणां किंनराणांच मर्त्यानांच न संशयः ।
शापं वाऽनुग्रहं वाऽपि यस्य यः कर्तु मिच्छति ॥ 55
चातुर्मास्यजपादेव कुरुते सर्व मीप्सितम् ।
देवतानां वशीकारे रूपदर्शन एवच ॥ 56
अष्टाक्षरं जपन्नेव लभते सिद्धि मीप्सिताम् ।
निष्कामोऽपि जपन्नेत द्वैष्णवः संयतेन्द्रियः ॥ 57

उपास्यते सर्वजनैः कालज्ञानंच विन्दति ॥ 58

इति श्रीपाश्वरात्रे परमसंहितायां
काम्यो नाम
षोडशोऽध्यायः ॥

श्रीः

# अथ सप्तदशोऽध्यायः

—:(०):—

ब्रह्मा

राजानो राजमात्रा वा दुर्वृत्ता दुर्जनाश्रिताः ।
इच्छन्तो वैष्णवीं दीक्षां किं कुर्युः कायशुद्धये ॥ 1

न हि तेषां तपः कर्तु मवकाशोऽस्ति कश्चन ।
न हि पापाभिभूतेन दीक्षा कार्या तु वैष्णवी ॥ 2

परमः

ईश्वरस्य समृद्धस्य विष्णुभक्तस्य धीमतः ।
जन्मप्रभृति संस्कारः कार्यो दीक्षा प्रवेशने ॥ 3

पुण्येन हि शुभे काले ब्राह्मणाना मनुज्ञया ।
कारयेत् काञ्चनमयौ द्वौ कटाहौ समौ ततः ॥ 4

पूरयित्वा तयोरेकं दध्ना मधु घृतेन च ।
एकान्ते निर्जने स्थाने शोभिते सर्वमङ्गलैः ॥ 5

स्नातमीश्वर माचार्यः पाणा वालम्ब्य पाणिना ।
देहं संहारमार्गेण चिन्तयित्वा यथा क्रमम् ॥ 6

जीवकामस्तु तं ध्यात्वा हेमगर्भं प्रवेशयेत् ।
अपरेण कटाहेन छादयेदुपरि स्वयम् ॥ 7

जीवं प्रकृति मापन्नं मत्वाऽसीन स्ततोगुरुः ।
आत्मानमपि संहृत्य पुनरुत्पाद्य सर्वतः ॥ 8

जीवस्य देहनिर्माणं कृत्वा मन्त्रै र्यथाक्रमम् ।
हेमगर्भा त्क्रमेणैव मुपस्थाप्य पुनरानयेत् ॥ 9

कर्तुं जन्म भवेदस्य मन्त्रवद्देव निर्मितम् ।
ततोऽस्य जातकर्माणि सकलं कर्म कारयेत् ॥ 10

नामधेयं च कर्तव्यं देवानामस्य किंचन ।
जातिशीलानुरूप्येण वैष्णवाना मनुज्ञया ॥ 11
चौलोपनयने चास्य कारये द्विधिपूर्वकम् ।
ततस्तु हेमगर्भं तं ब्राह्मणेभ्यः प्रदापयेत् ॥ 12
वैष्णवेभ्यो विशेषेण विद्वद्भि[द्भ्य?]श्च विशेषतः ।
त्रैवर्णिकं स्वकैर्मन्त्रैः सर्वकर्माणि कारयेत् ॥ 13
शूद्रंतु तन्त्रजैर्मन्त्रै र्दासान्तं नामच स्मृतम् ।
उपवीतं च वस्त्रं च गुणमन्त्रेण योजयेत् ॥ 14
उत्तरीयोपवीते च पूजाकाले तु नान्यदा ।
न शूद्रस्य परं बीजं जपे ध्याने च कल्पयेत् ॥ 15
न मन्त्रोच्चारणा द्दोषः कर्मयोगस्य सम्मतः ।
तीव्रभक्तो भवे द्य स्तु विद्या धर्मरतः शुचिः ॥ 16
तं शूद्रमपि सर्वत्र योजये दप्रमादनम् ।
तस्यापि नाचार्य पदं दीक्षासु स्थापनेऽपिवा ॥ 17
कल्पये त्पङ्क्तिमध्येच यजने याजनेऽपिवा ।
अन्येन वैष्णवेनैव देवं शूद्रः प्रपूजयेत् ॥ 18
शुश्रूषेत स्वयं तत्र पूजया तोषये त्तथा ।
एवं द्वादश वर्षाणि पूजयित्वा दिनेदिने ॥ 19
स्वयं पूजां पुनः कुर्या न्नैवं भवति किल्बिषी ।
उपनीत मथाचार्यः श्रद्धासहित मीश्वरम् ॥ 20
दीक्षये द्विधिना सर्वं शिक्षयित्वा यथाविधि ।
सौवर्णं राजतं वापि पात्रं सर्वत्र योजयेत् ॥ 21
तत्राधिवास्य तं भूय स्तुलाभारं प्रपूरयेत् ।
आत्ममान समो मानः कृत्वा काञ्चनमुत्तमम् ॥ 22

विद्वद्भ्यो दक्षिणां दत्वा शुद्धो भवति सर्वतः ।
तं पुन र्दीक्षये द्विद्वान् मन्त्रमुद्राश्च शिक्षयेत् ॥ 23
कल्पये दुपदेशांश्च समयाचारमेव च ।
आचाराणां तु वैकल्य मर्थदानेन पूरयेत् ॥ 24
नैमित्तिकानि कर्माणि महादानेन सर्वशः ।
वर्षे वर्षे तुलाभारं यो ददाति महाधनः ॥ 25
संवत्सर प्रयोगात् स विष्णोः सायुज्यमृच्छति ।
शक्तिमन्तं च भक्तं च द्वादश्यां मासि मासि च ॥ 26
स्नात्वा प्राङ्मुखमाचार्य[:?] चर्ममध्ये निवेशयेत् ।
कृष्णसाराजिने विप्रं व्याघ्रचर्मणि भूमिपम् ॥ 27
अजिने रौरवे वैश्यं शूद्रं तस्मिंश्च चर्मणि ।
तत्रोपवेश्य कलशै रत्नवद्भि र्हिरण्मयैः ॥ 28
तीर्थतोयेन संपूर्णैः स्वय मेवाभिषेचयेत् ।
पूर्वं संहृत्य चोत्पाद्य सर्वमन्त्रै रनुक्रमात् ॥ 29
मूर्तिमन्त्रैः क्रमादेव सृष्टिमार्गेण सर्वदा ।
अभिषिच्यच कुर्वीत मन्त्रै रस्य विभूषणम् ॥ 30
सुखासीनं तमाचार्यः शिक्षये देव मग्रतः ।
वैष्णवोऽसि भजेथा स्त्वं विष्णुमेवाग्र[श्र][1]या धिया ॥ 31
श्रद्धया परयोपेत स्तद्गुणानेव कीर्तयेत् ।
नच शक्यं तपोभि र्वा पापं नाशयितुं त्वया ॥ 32
यदि दानेऽप्यशक्य स्त्व मन्धे तमसि मज्जसि ।
यद्ददाति विशिष्टेभ्यो यच्चा[च] भुङ्क्ते भवार्थनम् [र्जितम्] 33

१. क. श्र. ।

नावदेव नव व्यक्तं शेषं न[क?]स्यापि रक्षसि ।
नी[दी]यमानंतु विप्रेभ्यो हने[हवने] विधिवर्तनम् ॥ 34

वैष्णवे चरणे साक्षा त्पुष्पन्यास मनुस्मरेत् ।
न विश्वास स्त्वया कार्यः पुत्र दार धनादिषु ॥ 35

कार्य एवतु विश्वासः पुरुषोत्तमपादयोः ।
यु[वु]द्धकाले तथा स्वप्ने विषमेष्वविषमेषुच ॥ 36

नव नान्यं प्रपश्यामि तं विना पुरुषोत्तमम् ।
तस्मा त्समय माचारं व्रतानि नियमां स्तथा ॥ 37

पूजनं वैष्णवानां च नापद्यपि परित्यज ।
इत्युक्तो गुणवान् स्वामी प्रणिपत्य कृताञ्जलिः ॥ 38

सर्वमेवं करोमीति गुरवे विनिवेदयेत् ।
धनदानेन मानेन पूजयेच्च ततो गुरुम् ॥ 39

सर्वकार्ये पुरस्कुर्या द्गौरवेण च वर्तयेत् ।
सहायानिव तच्छिष्यानन्यानपि समाचरेत् ॥ 40

विष्णुभक्ता न्विशिष्टांश्च दूरादेव विचारयेत् ।
आगतानां प्रियः कार्य अशनाच्छादनादिषु ॥ 41

विश्वासा च्छृणुयाच्चैनां ग्रहस्यप्रित्य[नान् ग्राहयस्व प्रि]यां-
स्तथा ।
सततंच जपेन्मन्त्र मेकान्ते वैष्णवं परम् ॥ 42

अर्चयेच्च स्वयं देवं शक्तः स्वामीतु दीक्षितः ।
प्रतिमां लक्षणोपेतां कारयित्वा हिरण्मयीम् ॥ 43

सौवर्णानि च पात्राणि शङ्खमुक्तिमयानिच ।
दीक्षितानेव कुर्वीत पूजायां परिचारकान् ॥ 44

पूजान्ते नित्यदानंच कुर्या दहरहर्नृपः ।
हिरण्य मन्नपानं च भुम्वबासाम्बराणिच ॥ 45
अन्येन पूजयेद्देव मशक्तः स्वय मर्चने ।
अर्चनान्ते हिरण्यंच तस्मै देयमसंशयम् ॥ 46
अन्यथा पूजकस्यैव देवपूजाफलं भवेत् ।
वैष्णवे ष्वधिवासेषु पूजाद्रव्यं च दापयेत् ॥ 47
देवभोगांश्च संरक्षे दुष्टनिग्रहतत्परः ।
विष्णुपादाश्रयं कृत्वा शपथं कारणे क्वचित् ॥ 48
न व्याज माचरेत् किंचित् कामंतु शपथान्तरे ।
कार्यं जानाति रिक्तेति नित्यनैमित्तिकेऽपिवा ॥ 49
आचार्यविहितं दानं कृत्वा न त्परिपूजयेत् ।
दानेन पापं विनुदे दानेनारोग्यमानयेत् ॥ 50
दानेनाचार्यं मन्विच्छेत् दानेन पर मर्चयेत् ।
राजा वा राजतुल्यो वा कुर्वन्नेवं दिने दिने ॥ 51
इहलोकसुखं भुक्त्वा विष्णुलोके महीयते ॥ 52

इति श्रीपाञ्चरात्रे परमसंहितायां
ईश्वरो नाम
सप्तदशोऽध्यायः

---

श्रीः

# अथाष्टादशोऽध्यायः

ब्रह्मा

ये नरा धन धान्येन समृद्धा ज्ञानवर्जिताः ।
भक्तिमन्तो महोत्साहाः किं तेषां संसृतिर्भवेत्[1] ? ॥ 1
नहि ते परमं देवं कर्मणा मनसा गिरा ।
शक्ताः पूजयितुं तस्मात् ब्रूहि तेषां मह द्धितम् ॥ 2

परमः

पुंसा मकृतविद्यानां भक्तानां धनिनां तथा ।
स्थापना देवदेवस्य विहितं सिद्धिरुत्तमम् ॥ 3
विदुषामपि मुख्यानां पुरुषाणां फलार्थिनाम् ।
भवत्येव परा सिद्धिः स्थापना त्परमेष्ठिनः ॥ 4
ये स्थापयन्ति देवेशं प्रासादे विधिपूर्वकम् ।
राजान स्ते भविष्यन्ति भूमिपाना मधीश्वराः ॥ 5
अथवा गुणसम्पूर्णे वंशे श्रेष्ठे महात्मनाम् ।
जायन्ते कृतविद्याश्च सुवृत्ता दीर्घजीविनः ॥ 6
अथवा[2] कामितां सिद्धिं लभन्ते नात्रसंशयः ।
नतु देवं प्रतिष्ठाप्य न फलं विन्दते नरः ॥ 7
इष्टका दारु पाषाणान् स्थापनार्थं समाहृतान् ।
पूजाद्रव्याणि देवस्य तान्यवै[वे]हि पितामह ! ॥ 8
प्रयतन्ते तु ये तत्र स्थापनार्थं यथाबलम् ।
प्रासादकारणार्थं वा स तेषां याग उच्यते ॥ 9

---

१. ख. सुकृतं । २. ख. कामिना सिद्धिर्लभते ।

उपकुर्वन्ति ये शक्त्या वचसा योजयन्ति ये ।
तेषामपि फलं ब्रह्मन् स्थापना दुपजायते ॥ 10

ब्रह्मा

कथं स परमो देव: स्थाप्यते भुवि मानुषै: ।
संसारीव कुटुम्बीव सर्वदा गृहमाश्रिता: ॥ 11

परम:

न केन चिदसौ देव: स्थाप्यते रक्ष्यतेऽपि वा ।
भक्ताना मनुगृह्णाति पूजामात्रं स केवलम् ॥ 12
किंकरास्तु वसन्त्येषु स्थानेषु विविधा: पृथक् ।
योगसिद्धिमनुप्राप्ता ये नरा: पुण्यकर्मभि: ॥ 13
भगवानेव तान् सर्वान् निवेशयति सद्मसु ।
भक्ताना मनुकम्पार्थं नानाशीलगुणोदयान् ॥ 14
तेषां तु पूजना त्प्रीतो भगवान् भूतभावन: ।
नराणां कुरुते सिद्धिं यथाचारं यथागुणम् ॥ 15
तस्मा त्ते कथयिष्यामि स्थापनस्य परं क्रमम् ।
यज्ञा द्वा लभते सिद्धिं वैष्णव: परमं हितम् ॥ 16
प्रासादो भवनं चेति द्विविधं स्थानमुच्यते ।
यत्रासौ स्थापितो देव: पुरुषाणां प्रसीदति ॥ 17
प्रासादे स्थापित: सर्वा ननुगृह्णाति पूजकान् ।
स्थापितो भवने तेषु पोषयत्यात्मन: कुलम् ॥ 18
इष्टका दारुपाषाणै: कारयेद्देवमन्दिरम् ।
गर्भागारं च तन्मध्ये स्थापये त्तत्र माधवम् ॥ 19
प्रासादा विविधा: प्रोक्ता: शिल्पविद्याविशारदै: ।
चतुरश्राश्च वृत्ताश्च साम्येन विषमेणच ॥ 20

तेषु नित्या ध्रुवाश्चापि ज्ञेया ब्रह्म[न्!?] महाबलाः ।
मध्यमा श्चाधमाश्चैव स्थितिकालेन कीर्तिताः ॥ 21

दारुभ्य इष्टकाः पक्का इष्टकाभ्यो घनाः शिलाः ।
तिष्ठन्ति सुचिरं कालं फलमेषां क्रमात् स्थितम् ॥ 22

प्रतिमां तु विधानेन कारयित्वा सलक्षणाम् ।
स्थापयेत् फलसिध्यर्थं काले प्राप्ते सुशोभने ॥ 23

सुवर्णं रजतं ताम्रं काष्ठपाषाणमृत्तिका ।
द्रव्याणि प्रतिमायास्तु पूर्वं पूर्ववदेव वा ॥ 24

साधको रचयित्वादौ सालंकारं समंततः ।
पूर्वतो गरुडस्यापि भवनं कारये द्बुधः ॥ 25

मातणां मण्टपं चापि दक्षिणेन प्रकल्पयेत् ।
दिशासु लोकपालानां शिलापीठानि कारयेत् ॥ 26

ईशान सोमयो र्मध्ये विष्वक्सेनस्य मण्डपम् ।
प्राकारंतु बहिः कृत्वा द्वारदेशे च गोपुरम् ॥ 27

आचार्यं वरये त्पश्चा त्सुवृत्तं तन्त्रपारगम् ।
एतत्सर्वं क्रमा त्कृत्वा मूर्तिपान् परिगृह्यच ॥ 28

नक्षत्राणि परीक्षेत तिथि राशि ग्रहास्तथा ।
यद्येते यजमानस्य संभवन्ति शुभावहाः ॥ 29

तदा भागवताचार्यः प्रारभेता धिवासनम् ।
बहवो यजमाना श्चे त्स्थापकस्य पुरःसराः ॥ 30

तत्रापि जातयोगेन शुभवृद्धिं निरूपयेत् ।
बलिनो राशयो ग्राह्याः शुभग्रहबलस्थिताः ॥ 31

अविष्टयरिक्ता स्तिथयो नक्षत्राणि स्थिराणि च ।
निमित्तानि परीक्ष्याग्रे शकुनानि शुभा गिरः ॥ 32

गृह्णीयात् धनदानेन प्रतिमां लक्षणान्विताम् ।
प्रासादस्या ग्रतः कुर्या दधिवासनमण्डपम् ॥ 33

शुभं सर्वत्र विहितं स्नानपीठसमन्वितम् ।[1]
जलाधिवासनार्थं च स्थान मन्य त्प्रकल्पयेत् ॥ 34

तोयपूर्णेन पात्रेण संयुतं सर्वतोवृतम् ।
नदीषु देवखातेषु तडागे निर्झरे ह्रदे ॥ 35

संभवे सति कुर्वीत जलावासं यथाविधि ।
प्रासाद द्वारमानेन बिम्बमानं प्रकल्पयेत् ॥ 36

बिम्बमानानुरूपं वा प्रासादं कारयेद्बुधः ।
विप्रान् द्वादश वा ष्टौ वा चतुरो वा गुणान्वितान् ॥ 37

वैष्णवान् मूर्तिपान् कुर्या दाचार्यवचने स्थितान् ।
प्रत्येकमेव सर्वेषां होमद्रव्याणि कल्पयेत् ॥ 38

एवं कृत्वा तु बिंबस्य जलावासं प्रकल्पयेत् ।
त्रिरात्र मेकरात्रं[वा] पुरस्ता दधिवासयेत् ॥ 39

आचार्यो मूर्तिपैः सार्धं वस्त्रालंकार भूषितम् ।
स्थापनस्य तु पूर्वेद्यु रुपवासपरो भवेत् ॥ 40

अपराह्णे तु संप्राप्ते बिंबं प्रक्षाल्य वारिणा ।
परीक्ष्य लक्षणं सम्यक् ब्राह्मणान् स्वस्ति वाच्य च ॥ 41

सदर्भै रहतैर्वस्त्रैः सर्वतः छादयेद्गुरुः ।
स्थानं जलाधिवासस्य नीत्वा सहमूर्तिपैः ॥ 42

आत्मन्यासं क्रमा त्कृत्वा सकलीकरणं तथा ।
लोकपालान् बहि र्धृत्वा स्थानस्य तु समन्ततः ॥ 43

---

१. ख. स्थानं ।

अर्चां संद्वारमार्गेण नद्या स्तोयं प्रवेशयेत् ।
पञ्च मन्त्रैः क्रमादेवं रक्षां कुर्याच्च सर्वतः ॥ 44
अथ रात्र्यां व्यतीतायां सर्वमङ्गल संयुतम् ।
कुर्या त्तोरण विन्यासं मण्डपस्य दिशां मुखे ॥ 45
कलशान् द्वारपार्श्वेषु परि[वारि]पूर्णा न्निधापयेत् ।
आलिप्तपल्लवैर्युक्ता न्वारिमन्त्रेण सर्वशः ॥ 46
पताका ध्वज विन्यासं वायुमन्त्रेण कल्पयेत् ।
एवं कृत्वा समानीय बिंबं सलिलमध्यतः ॥ 47
तूर्य वादित्र निर्घोषैः प्राविशे त्स्नानमण्डपम् ।
स्थापयित्वातु शय्याया मर्चां प्राक्छिरसां गुरुः ॥ 48
दृष्टि मुद्धाटये त्पूर्वं सूच्याऽचार्यः शितानया ।
पश्चात्तु पूजितः शिल्पी कुर्या च्छस्त्रेण शिल्पवित् ॥ 49
उन्मील्य नयने सम्यक् घृतेन मधुना तथा ।
समभ्यर्च्य विशुध्यर्थं कारयेत् स्नानमंभसा ॥ 50
प्राङ्मुखं स्नानपीठस्थं स्नापये त्त मुदङ्मुखः ।
सिद्धार्थतण्डुलैः पिष्टैः पञ्चगव्यैः क्रमेणच ॥ 51
आच्छाद्य स्नापये त्पश्चात् पञ्चमन्त्रैः समन्ततः ।
सरित्तीर्थे नगाग्रेभ्यो वल्मीक वृषशृङ्गतः ॥ 52
वराहगजदन्ताभ्यां खाता मादाय मृत्तिकाम् ।
यथासंभवतो वापि कृत्वा तन्मात्रमन्त्रिताम् ॥ 53
मृदमालिप्य कुर्वीत स्नानं सलिलविद्यया ।
ततो गन्धोदकैः स्नानं कारयेत् क्षितिविद्यया ॥ 54
तीर्थांभसा च तोयेन तोयैश्चैव तु तेजसा ।
वायूनां दिव्यनु [त्याच?] स्नापयित्वा समंततः ॥ 55

स्नापयित्वा समभ्यर्च्य गन्धैरपि नवैः शुभैः ।
स्पर्शमन्त्रेण वस्त्रे द्वे दत्वा यज्ञोपवीतिकम् ॥ 56
दत्वा दाभरणं सर्वं मज्जनं पुरुषात्मना ।
विश्वमन्त्रेण माल्यां च प्रावारं गुणविद्यया ॥ 57
दीपं च तेजसा दत्वा छत्रं च क्षितिविद्यया ।
दत्वोपरि वितानं च चामराणि च वायुना ॥ 58
एवं कृत्वा नयेद्बिंब मधिवासनमण्डपम् ।
मृदुशय्या समायुक्तं धूपदीप समन्वितम् ॥ 59
यागोपकरणाढ्यं च वैष्णवै रूपशोभितम् ।
स्थापयित्वा ततो बिंबं शय्यायां दक्षिणामुखम् ॥ 60
मन्त्रन्यासं प्रकुर्वीत प्रलयोदयसंयुतम् ।
आत्मनिर्वृतिमायांच सर्वमन्त्रसमन्विताम् ॥ 61
कार्यैश्च कारणैश्चैव संयुक्तं विधिपूर्वकम् ।
शङ्खं चक्रं गदापद्मं कल्पयित्वा च मुद्रया ॥ 62
कुर्या दावाहनं विष्णोः पञ्च मन्त्रैः कृताञ्जलिः ।
सान्निध्यं सर्वकालेषु संप्रार्थ्य प्रतिपूजयेत् ॥ 63
अर्घ्यं पाद्य निवेद्यानि दत्वा मन्त्रै र्यथाविधि ।
पूजयित्वा ततो देवं परिहोमं समाचरेत् ॥ 64
कृत्वातु त्रीणि कुण्डानि दिक्षु कृत्वा तु मूर्तिपान् ।
जुहुयात् द्वादश श्रेष्ठान् अष्टौ चत्वार एववा ॥ 65
वृत्तं वा चतुरश्रं वा कुण्डं सर्वत्र कारयेत् ।
कृत्वा तु मध्यतः कुण्ड माचार्यो जुहुया त्पुनः ॥ 66
कुशानास्तीर्य पात्राणि साधयित्वा यथाविधि ।
हविराज्यं च संस्कृत्य जुहुयुः सर्वदेवताः ॥ 67

एकतु मूर्तिपापा[ला]नां द्वादशानां विधीयते ।
मध्येतु देवदेवस्य मन्त्रेण जुहुयाद्धविः ॥ 68
सर्वेषां सदृशः कल्पो भेदो दिग्देवतावशात् ।
अग्निमध्ये महापद्मं ध्यात्वा केसरपत्रिणम् ॥ 69
तत्रस्थां देवनां ध्यात्वा होमं कुर्यु स्ततो द्विजाः ।
प्राङ्मुखा जुहुयुः सर्वे सोत्तरीयं समाहिताः ॥ 70
ततो होमावसाने तु तेभ्यो दत्वा तु दक्षिणाम् ।
अर्घ्यं दत्वा च देवाय छादये द्वसनैः शुभैः ॥ 71
कृत्वोपरि वितानंच बहिः सर्वं परिश्रयेत् ।
पीठं ब्रह्मशिलां चापि पूजयित्वाऽधिवासयेत् ॥ 72
नृत्तगीतादिभि स्तत्र कुर्या ज्जागरणं निशि ।
रक्षांच सर्वतः कुर्या दधिवासनमण्डपे ॥ 73
आचार्य स्तूपवासेन देवपार्श्वे निशां नयेत् ॥ 74
इति ते सर्वमाख्यात मधिवासन मुत्तमम् ।
अत ऊर्ध्वं प्रवक्ष्यामि स्थापनं विधिचोदितम् ॥ 75

इति श्रीपाञ्चरात्रे परमसंहितायां अधिवासनं नाम
अष्टादशोऽध्यायः

---

श्रीः

# अथैकोनविंशोऽध्यायः

ब्रह्मा

स्थापितोऽपि कथं देवः स्थानेषु विधिना नरैः ।
क्वचि त्कथंचि दैश्वर्यं सान्निध्यं च करिष्यति ॥ 1

परमः

देशस्य गुणदोषाभ्यां कालस्य पुरुषस्य च ।
प्रासादस्य च बिंबस्य स्थापनं विद्यते भुवि ॥ 2
एतेषु दोषयुक्तेषु देवस्य स्थापने मते ।
शून्यं भवति सर्वत्र राक्षसै र्वा ऽभिभूयते ॥ 3
देशे दुर्जनभूयिष्ठे विप्रकृष्टजलेऽपिच ।
नाना व्याधिसमाकीर्णे न देवं स्थापयेद्बुधः ॥ 4
न रात्रौ स्थापये द्देवं पापग्रहबले तथा ।
उग्रेच तिथिनक्षत्रे सूर्ये चादृष्टमण्डले ॥ 5
नागृहस्थो नचाविद्वान् नाविप्रो नोपजीविकः ।
नच न्यूनाङ्गरिक्ताङ्गः स्थापये त्पुरुषोत्तमम् ॥ 6
कृतपर्युषिते जीर्णे मानहीनोपजीविकम् ।
कर्मान्तरेण भूयिष्ठे नागारे स्थापये द्धरिम् ॥ 7
नोद्वासितं न भग्नंच न प्रमाण विवर्जितम् ।
न गर्भयुक्तं जीर्णं वा स्थापयेद् बिंब माचरेत् ॥ 8
एवमेतेषु दुष्टेषु देवस्य स्थापने कृते ।
यक्षरक्षःपिशाचानां सन्निवासो भविष्यति ॥ 9

यदकृदेव देवस्य प्रसाद मवधारयेत् ।
तदा तद् दोषयुक्तंच गुणयुक्तं भविष्यति ॥ 10

एतेषु गुणयुक्तेषु स्थापकः प्रतिकथितः ।
स्नात्वाचम्य शुचिर्भूत्वा वस्त्रालंकार भूषितः ॥ 11

मूर्तिपैः सार्धमागत्य मण्डपस्य प्रदक्षिणम् ।
आसीनो दक्षिणे पार्श्वे देवस्य प्राङ्मुखः शुचिः ॥ 12

न्यासमार्गं प्रयुञ्जीत स्वशरीरे समन्त्रकम् ।
प्रासादं शोधये त्पश्चात् बहिरन्तश्च सर्वशः ॥ 13

तोरण ध्वज विन्यासं सपताकं प्रयोजयेत् ।
कलशान् स्थापयेत्पश्चात् द्वारदेशेषु सर्वतः ॥ 14

द्रव्याणि पूजनार्थानि होमार्थानिच संहरेत् ।
रत्नानि धातुबीजानि समुचित्य पृथक् पृथक् ॥ 15

तूर्यवादित्र हस्तांश्च संहरेत्कुशलान् नरान् ।
एतत्सर्वं समानीय निमित्ता न्युपलक्ष्य च ॥ 16

स्थानानि देवतानांच प्रतिपूज्य यथातथम् ।
स्थापनस्य विधिं कुर्या दाचार्यः सह मूर्तिपैः ॥ 17

दुःस्वप्नदर्शने जाते दुर्निमित्तागमे तथा ।
मण्डपे वह्निमादीप्य प्रायश्चित्तानि कारयेत् ॥ 18

जुहुया त्पश्च मन्त्रैस्तु आज्यमेव क्रमात्क्रमात् ।
दशकृत्वः शतंवापि सहस्रंवा यथाक्रमम् ॥ 19

पुण्याह जयघोषैश्च विप्राणां ध्वनिभिस्तथा ।
ऊनं वा व्यतिरिक्तं वा व्यस्तं वा प्रतिपूरयेत् ॥ 20

ततः प्रदक्षिणं कृत्वा देवदेवं कृताञ्जलिः ।
लब्धानुज्ञो बहिः कुर्यात्प्रासादंच प्रदक्षिणम् ॥ 21

आन्त्रदृष्ट्या समालोक्य गर्भागारं पुनस्तदा ।
सर्वं वाऽक्षतदूर्वाभिः समन्तात् विकिरेत्पुनः ॥ 22
अस्त्रमन्त्रेण भूयश्च मार्जये द्वायु विद्यया ।
कारयित्वा कुशैरेव मार्जनं मूर्तिपैः शुभैः ॥ 23
निरस्य मार्जनीं पाणिं प्रक्षाल्य सलिलैः शुभैः ।
नवपात्रोपनीतेन प्रासादस्य समन्ततः ॥ 24
लेपये द्गव्यतोयेन दीक्षितैः परिचारकैः ।
अस्त्राभिमन्त्रितैः स्तोयैस्तद्गृहं प्रोक्षयेत्स्वयम् ॥ 25
कुशाग्राक्षत दूर्वाभि र्विकिरे त्पञ्चशक्तिभिः ।
अष्टाक्षरेण मन्त्रेण धूपं सर्वत्र योजयेत् ॥ 26
दीपंच तेजसा कुर्यात् दिक्षु सर्वासु साधकः ।
गर्भागारान्तरे चैवं कृत्वा मुद्रां प्रकाश्यच ॥ 27
दक्षिणेन बहिर्द्वारं सैकते स्थण्डिले गुरुः ।
अग्निमादीप्य जुहुया त्पञ्चोपनिषदा घृतम् ॥ 28
सहस्रं शतकृत्वो वा सततं वास्तु शान्तये ।
अपामार्गस्य समिधः शम्यायाः खदिरस्य च ॥ 29
यक्षरक्षः पिशाचानां शान्त्यैतज्जुहुयात्पुनः ।
मुखमन्त्रै स्त्रिभि श्चापि हुत्वा शेषं समाप्यच ॥ 30
न[च?]न्दनस्य रसेनाक्तं गृह्णीया त्सूत्र मञ्जसा ।
गर्भागारान्तरे तेन दिङ्मानं विधिना चरेत् ॥ 31
पातयित्वा दिशां सूत्रं विदिशांच सहानुगैः ।
सोमेशानन्तरे सूत्रं याम्यनैर्ऋतयोः क्षिपेत् ॥ 32
बिंबवृत्त मवृत्तस्य पञ्चविंशति भागशः ।
सूत्रयोगपदं कृत्य निर्दिशे त्स्थापनास्पदम् ॥ 33

एवमृद्धिकरं प्राहुः स्थापनात् वैष्णवा नराः ।
सूत्रयोगे तु वाञ्छन्ति मध्यमां सिद्धि मीप्सिताम् ॥ 34
न्यूने वाऽप्यधिके वापि प्रमाणे स्थापने कृते ।
स्थापन[क?]स्य विनाशः स्यात् यजमानस्य चा न्वहम् ॥ 35
पश्चिमाभिमुखस्यापि देवस्या य मवः क्रमः ।
तेनैव सूत्रपातेन कल्पनीयं प्रयत्नतः ॥ 36
कृत्वैवं स्थापनक्षेत्रं विंश वृत्तं प्रमायच ।
देवतानांच बाह्यानां स्थापनास्पदमुद्दिशेत् ॥ 37
देवपार्श्वं ततो गत्वा दत्वा पुष्पाञ्जलिं पदे ।
पीठं ब्रह्मशिलावीतिं दीक्षितैरानयेद्गृहम् ॥ 38
वेश्मप्रदक्षिणं नीत्वा गर्भागारंच सर्वतः ।
सर्वं प्रवेशयेत् द्रव्यं नान्यथा स्थापने[नं?] हरेः ॥ 39
स्वयं प्रत्यङ्मुखो भूत्वा तांतु ब्रह्ममयीं शिलाम् ।
स्थापनास्पदमध्ये तु स्थापयेत्त्रिगुणात्मना ॥ 40
तां पूजयित्वा गन्धाद्यै रत्नबीजानि निक्षिपेत् ।
दिक्षु सर्वासु मध्ये च गर्तेषु नवसु स्वयम् ॥ 41
स्थापकोनिक्षिपेद् द्रव्यं मन्त्रेणादाय पाणिना ।
निक्षिपेत्सर्वगर्तेषु तेजोरु[क्रम] मथाग्रतः ॥ 42
वज्रंच पद्मरागंच वैडूर्यं नीलमेवच ।
मौक्तिकं पुष्परागंच शङ्खं मरतकं तथा ॥ 43
स्फटिकं चानुपूर्व्येण दिक्षु मध्येच निक्षिपेत् ।
अष्टाक्षरैश्च वर्णैस्तु समस्तेनच निक्षिपेत् ॥ 44

तालं शिलामञ्जनंच कासीसं पानरं[रदं?] तथा ।
सौराष्ट्रं रोचनं चापि माक्षिपं विद्रुमं तथा ॥ 45
व्रीहि माषगवीभिश्च तिलान् गोधूमकान् यवान् ।
[तृण?] प्रियङ्गु मुद्गाश्च निक्षिपे त्पूर्ववत्क्रमात् ॥ 46
नगर्तादधिकं द्रव्यं नचोनं कल्पये त्कचित् ।
शिलातल प्रमाणेन निक्षिपे त्कुशलो गुरुः ॥ 47
सर्वद्रव्यगणं मध्ये केचि दाहु र्विभूतये ।
नच वै वैष्णवः कुर्यात् पञ्चरात्र विचक्षणः ॥ 48
आरण्यानां च बीजानां निक्षेपो न प्रशस्यते ।
ग्रामवृद्धि स्तथा न स्यात् वनवासेन निक्षिपेत् ॥ 49
शिलाभि रिष्टकाभि र्वा कृत्वा पीठस्य गोचरम् ।
साम्येन स्थापये त्पीठं पीठमन्त्रै र्यथाक्रमम् ॥ 50
...स[अन?]न्तास्तरणादीनि तत्र ध्यात्वा समन्त्रकम् ।
पूजावारिपथं कृत्वा सोमदिङ्मुखपूर्वतः ॥ 51
अर्चयित्वा च गन्धाद्यै रेवं पीठम वस्थितम् ।
छादयित्वाऽहतैर्वस्त्रै रक्षां कृत्वाच सर्वतः ॥ 52
स्थापकस्तु बहि र्गत्वा सह भागवतै र्नरैः ।
विघ्नेशस्य शिवस्यापि पूजये दास्पदं शुभम् ॥ 53
दक्षिणस्यां दिशि तयोः पूर्वे पश्चिम संस्थयोः ।
प्रासाद द्वारसांन्निध्ये गरुडस्यापि कल्पयेत् ॥ 54
पृष्ठभागे त्वनन्तस्य मातृणां दक्षिणेन च ।
दिक्पतीनां दिशास्वेव स्थानानि परिकल्पयेत् ॥ 55
प्राकार वेश्मनो र्मध्ये गन्धपुष्पैश्च पूजयेत् ।
सोमेशानान्तरे कुर्याद्विष्वक्सेनस्य चास्पदम् ॥ 56

प्राकारस्याविदूरेण देवनिर्माल्य धारिणम् ।
प्राकारस्य बहिःपीठं बलि दानार्थमेव च ॥ 57

पूजापीठसमंकुर्या द्देवस्य पुरतः स्थितम् ।
देवतानां विधायैवं स्थानानि सुसमाहितः ॥ 58

देवपार्श्वं समासाद्य पूजां कुर्या द्गरीयसीम् ।
पूर्वं कृत्वाऽत्मनि न्यासं पश्चा द्देवे समाचरेत् ॥ 59

तत्रैनं सकलं कृत्यमन्त्रेणा वाहृय पूजयेत् ।
अक्षतै र्गन्धपुष्पैश्च धूपदीपविभूषणैः ॥ 60

भक्ष्य भोज्य निवेद्यैश्च संपूज्य विधिवद्धरिम् ।
अहतै र्वसनैः श्लक्ष्णैः समन्ता त्परिवेष्टयेत् ॥ 61

ततो देवस्य महतो [पुरतो?] यन्त्रमेकं विधाय च ।
दीक्षितैर्मूर्तिपैर्जुष्टां शिबिकां तोरणान्विताम् ॥ 62

अभ्यनुज्ञां च याचित्वा यन्त्र मारोपये द्धरिम् ।
ततः स्तोत्राणि संकीर्त्य वेश्म कुर्या त्प्रदक्षिणम् ॥ 63

चामरैः कलशैः छत्रैर्वितानै र्ध्वजयष्टिभिः ।
दीपिकाभिश्च धूपैश्च शङ्खदुन्दुभि निःस्वनैः ॥ 64

नृत्तगीतादृहासैश्च विशालं कुर्यु रुत्सवम् ।
आचार्यो वाग्यतो गच्छेत् यानमालम्ब्य पाणिना ॥ 65

देवानेव धिया ध्याये द्देवस्य परिचारकान् ।
आदित्यान् मरुतान् साध्यान् वसून्रुद्रान् ऋभूंस्तथा ॥ 66

अश्विनावुरगान् सिद्धान् ग्रहनक्षत्र तारकान् ।
एवं ध्यात्वाऽप्रमादेन वेश्म नीत्वा प्रदक्षिणम् ॥ 67

---

१ ख. विधाचैवं ।

द्वारदेशेतु संप्राप्ते दद्यादर्घ्यं यथाविधि ।
पादुकेच नवे दद्यात् पुरतः स्पर्श विद्यया ॥ 68
गर्भागारस्य द्वारेतु दत्वार्घ्यं मन्त्रपूर्वकम् ।
अतः[अन्तः?]प्रवेशयेद्देवं दीक्षितैर्व्योमविद्यया ॥ 69
दिङ्मात्रेण परिक्रम्य देवपीठं प्रदक्षिणम् ।
अवतार्य शनैर्य न्त्रस्थापने यत्नमाचरेत् ॥ 70
मुहूर्ते शोभने प्राप्ते ब्राह्मणानामनुज्ञया ।
तूर्यवादित्रनिर्घोषै र्धूपदीपैश्च संकुलैः ॥ 71
आचार्यः पुरतः स्थित्वा पूर्वेण स्थापये द्धरिम् ।
पीठमध्यगते गर्ते बिम्बशङ्कुर्यथास्थितम् ॥ 72
ऊर्ध्वलम्बितसूत्रेण स्थितिश्चान्यसमा यथा ।
स्थापयित्वा तथा देवं मुद्राभेदं प्रदर्श्य च ॥ 73
सांनिध्यमर्थयेद्बुध्या सर्वकालं प्रणम्य च ।
अष्टाक्षरेण दद्यात्तु मालामस्मै कृताञ्जलिः ॥ 74
आसनं पीठमुद्दिश्य पाद्याचमनपूर्वकम् ।
अर्घ्यं दत्वा विधानेन प्रदद्यान्मुखवासकम् ॥ 75
चामरेच वितानं च दद्या त्पुष्पाञ्जलिं तथा ।
ततः प्रदक्षिणीकृत्य प्रीतिदानानि दापयेत् ॥ 76
पूजाद्रव्या ण्यलंकारान् वाहनं भूमिमेव च ।
प्रीतिदानंतु यो दद्यात् वैष्णवे स्थापने कृते ॥ 77
देवस्य बहुसाहस्रं परजन्मनि जायते ।
ततः प्रच्छाद्य देवेशं दुकूल क्षौम पट्टकैः ॥ 78

संवृत्य पुरतो द्वारं निष्क्रम्य सह दीक्षितैः ।
आचार्यः परिवारांश्च स्थापये दस्य सर्वतः ॥ 79
वैनतेयमनन्तंच पीठस्थौ वैष्णवावुभौ ।
तां तां प्रतिकृतिं कृत्वा देवपादकृताननौ ॥ 80
हस्तिवक्त्रं गणपतिं लिङ्गमूर्तिंच शङ्करम् ।
स्थापये द्दिशि याम्यायां दक्षिणाभिमुखा वुभौ ॥ 81
सर्वे पीठशिलाः स्थाप्या निश्चलाः सर्वतः समाः ।
गन्धमाला विभूषाभिः पूजनीयाश्च यत्नतः ॥ 82
वस्त्रैराच्छाद्य सर्वांश्च प्रागादिक्रममास्थितान् ।
शिलाभिरिष्टकाभि र्वा स्थापये द्दिक्षु दिक्पतीन् ॥ 83
वीरभद्रंच विघ्नंच स्थापयित्वान्त पार्श्वयोः ।
स्थापये त्पङ्क्तिरूपेण मातृः सप्त यथाविधि ॥ 84
अभ्यर्च्य बलिपीठं च शिष्टा बाह्याश्च देवताः ।
आवाह्यमनसाऽचार्यो यजमानं समादिशेत् ॥ 85
वैष्णवान् पण्डितांश्चापि प्रीतिदानेन तोषयेत् ।
भक्ष्यभोज्यान्नपानैश्च सर्वमेव महाजनम् ॥ 86
वासांसि मुखवासांश्च यथोत्साहं प्रदापयेत् ।
सर्वं परिजनं चापि यत्नेन परितोषयेत् ॥ 87
यजमानोऽपि तत्सर्व मेव माचार्य चोदितम् ।
देव भक्त्याच कुर्वीत दिवारात्रंच सन्ततम् ॥ 88
संवृत्य साधको द्वारं रक्षां कृत्वाच पुष्पकलाम् ।
बहिर्गत्वाऽन्नपानानि दक्षिणांच प्रदापयेत् ॥ 89

त्रिरात्रं देवदेवस्य स्थापितस्य नवास्पदे ।
पूजनं नाचरे द्विद्वान् दक्षिणा तत्र चोद्यते ॥ 90
यद्ददाति धना न्येषः पात्रापात्र परीक्षया ।
सामान्येना न्नपानेन तेनास्य प्रीयते हरिः ॥ 91
यस्तु दानै र्विना कुर्या त्स्थापनं परमेष्ठिनः ।
तस्य रोगा भविष्यन्ति बन्धूनां च महद्भयम् ॥ 92
तस्मा दन्नाद्य भूयिष्ठं दक्षिणाभि र्विराजितम् ।
स्थापनं कारये द्विद्वा नच्युतस्य विवृद्धये ॥ 93

इति श्रीपाञ्चरात्रे परमसंहितायां
स्थापनं नाम
एकोनविंशोऽध्यायः

श्रीः

# अथ विंशोऽध्यायः

ब्रह्मा

अग्निकार्यविधिं ब्रूहि सर्वत्र पुरुषोत्तम ! ।
पूजनेनच संबन्धं तस्योपकरणानिच ॥ 1

परमः

अग्निकार्यं प्रवक्ष्यामि सामान्येन पितामह ! ।
दीक्षायां स्थापने चापि नित्यनैमित्तिके तथा ॥ 2

आज्यपात्रं चरुस्थाली प्रोक्षणीः समिधः कुशान् ।
सिकता स्तण्डुलं तोयं दर्वीपरिधयः स्रुवः ॥ 3

अङ्गारं व्यजनं कूर्चं शुष्ककाष्ठानि मेक्षणम् ।
गन्धपुष्पादि चै तस्य द्रव्योपकरणक्रमम् ॥ 4

एवं द्रव्याण्युपानीय वह्निस्थानस्य पार्श्वतः ।
आरभेत हरेः पूजां तन्त्रमार्गेण साधकः ॥ 5

देवमावाह्य दत्वाऽर्घ्यं मुखवासं प्रदायच ।
लब्धानुज्ञः परावृत्य गत्वा दक्षिणतो हरेः ॥ 6

आभिमुख्येन कुर्वीत वह्नेः स्थानं मनोहरम् ।
मण्डलं वह्निकुण्डंतु दीक्षायां हस्तसम्मितम् ॥ 7

कुर्यात् स्थण्डिलमन्यत्र सैकतं चतुरश्रकम् ।
अस्त्रेणोद्धृत्य तां भूमिं शुष्के[ष्केन?]ण प्रोक्ष्य वारिणा ॥ 8

विस्तार्य सिकता दिक्षु पृथिव्यां सर्वतः समाः ।
अहंकारै र्लिखित्वा प्राक् गुणै रुत्तरतो लिखेत् ॥ 9

पाणिं प्रक्षाल्य तोयेन वह्निमादाय तेजसा ।
दत्वा पृथिव्याः काष्ठानि दीपये द्वायुविद्यया ॥ 10

समन्ताच्चैन मभ्युक्ष्य तोयमादाय पाणिना ।
वासुदेवादिभि र्मन्त्रैः कुशान् दिक्षु निधापयेत् ॥ 11

अग्ने रुत्तरतोहृद्येनं निक्षिप्य स्पर्शविद्यया ।
तत्र द्रव्याणि सर्वाणि द्वन्द्वरूपेण साधयेत् ॥ 12

चरुस्थाने च तत्स्थाल्यौ दर्वींच स्रुवमेवच ।
आज्यस्थालीं समित्पुष्पं तण्डुलं मेक्षणं तथा ॥ 13

द्वन्द्वरूपाणि संभृत्य साधये च्चमसां पृथक् ।
कूर्चं दक्षिणतो वह्ने र्निदध्या द्ब्रह्मविद्यया ॥ 14

उत्तरेण च संपूर्णं निवृत्त्या तोय भाजनम् ।
कृत्वा पवित्रं विखेन [विलिखेत्] बध्वा साग्रं कुश-द्वयम् ॥ 15

तोयपात्रे जलं सिक्त्वा तेनोत्पूय गुणै स्त्रिभिः ।
उत्तानीकृत्य पात्राणि प्रोक्षये त्तेन वारिणा ॥ 16

चरुपात्रं समादाय तण्डुलान् मुष्टिना क्षिपेत् ।
चतुरेव तु धर्मार्थे जलं सिक्त्वाच पाणिना ॥ 17

मन्त्रेणान्न[ग्नाव?]मधिश्रित्य वीजयेत् व्यजनेन तु ।
यन्त्रेणाग्नावधिश्रित्य वीजयेत् व्यजनानिलैः ।
आज्यपात्रे निषिच्याज्यं सपवित्रेण तेजसा ॥ 18

निधायोत्तरतो वह्नेर्दर्भानादीप्य स्पर्शयेत् ।
कुशाग्रे द्वेच तत्रैव निक्षिपे त्परमेष्ठिना ॥ 19

प्रदीप्य तेजसा भूयो वेष्टये त्तद्धविर्द्वयम् ।
दग्धानपि विधायाग्नौ गुणैरुत्पूयतद्घृतम् ॥ 20

पवित्र मग्नौ विस्रस्य निक्षिप्य परमेष्ठिना ।
दर्वीस्रुवं कुशाग्राणि वह्नावादीप्य तेजसा ॥ 21

स्पर्शमन्त्रेण संमृज्य ध्रुव[स्रुच?]मन्तर्बहिस्तथा ।
प्रक्षाल्य स्रुवमप्येवं दर्भानग्नौ विनिक्षिपेत् ॥ 22

स्रुवेणाज्यं चरौ सिक्त्वा चरु मुद्वासयेदुदक् ।
तत्रापि कार्यविच्छेदरक्षां कुर्यात्समंततः ॥ 23

देवपार्श्वे समासाद्य पूजनाक्रममाचरेत् ।
तोयं प्रदाय चमसा दन्तकाष्ठं समर्पयेत् ॥ 24

जलं दत्वा च तेनैव गन्धामलक[माल्यक?]मादिशेत् ।
निर्माल्यमानं ध्यात्वाच विष्वक्सेनाय पार्श्वतः ॥ 25

पीठा दुत्थाप्य देवेशं पादुकाभ्या मुपासकः ।
स्नानभूमि मुपानीय मनसा स्नानमर्पयेत् ॥ 26

अभिषिञ्चे द्रजःशक्त्या दद्यात् स्पर्शेन कञ्चुकम् ।
तमसाच्छादनं दद्याद्गन्धकल्कं समंततः ॥ 27

अभिषिच्य तथा भूयः कलशै र्द्वादशापरैः ।
पञ्चोपनिषदा शान्ति पञ्चकृत्वः समाचरेत् ॥ 28

पाद्यमाचमनीयं च दत्वा स्थाप्यं प्रतिग्रहे ।
अष्टाभिः कलशै रेन मभिषिञ्च्य समंततः ॥ 29

मूलमन्त्रैस्त्रिभिः पश्चात् शान्ति कृत्वा चतुः[1]शतम् ।
वस्त्रै राच्छादये त्तस्य स्पर्शेनाङ्गानि सर्वशः ॥ 30

उपवीतं ततो दद्या त्रिगुणेन त्रिवृत्कृतम् ।
उत्तरीयं ततः पीतं प्रदद्या त्स्पर्शविद्यया ॥ 31

---

१. ख. चतुः ।

पाद्यादि दत्वा शिरसः स्नानगन्धेन योजयेत् ।
तोयं दत्वाऽङ्गरागेण देहं तेनैव लेपयेत् ॥ 32
वारि दत्वा नवे वस्त्रे पुनर्दद्या यथा पुरा ।
छन्नवीरं ततो दद्यात् त्रिगुणे नैककाञ्चनम् ॥ 33
कुण्डले कर्णमुद्रेच नीवीबन्धनमङ्गदे ।
वलये कटके चोभे अङ्गुलीयानि च क्रमात् ॥ 34
कुक्षिबन्धं गुल्फबन्धं बाहुबन्धं शिखामणिम् ।
उष्णीषं च ततो दद्यात् लंबसूत्रं च वासिकाम् ॥ 35
कुसुमानि स्रजं मालां सर्वं रूपस्य विद्यया ।
श्रीवत्सं कौस्तुभं चास्य वनमालांच शाश्वतीम् ॥ 36
तथैव दद्या न्मनसा शङ्ख चक्रादि मुद्रया ।
आदर्शं रूपमन्त्रेण नयनाञ्जनमेव च ॥ 37
धूपं दीपंच दत्वाऽस्मै पाद्याचमन मर्पयेत् ।
समर्प्य पादुके चैनं पीठदेशं समानयेत् ॥ 38
अर्घ्यं दद्या यथान्यायं पुनराचमनं तथा ।
माक्षिकां शर्करा सर्पिः दधिक्षीरं च पञ्चमम् ॥ 39
परमेष्ठ्यादिभि मन्त्रै र्मिश्रयित्वा समंततः ।
मधुपर्कं रसेनास्मै पाणिभ्यां प्रतिपादयेत् ॥ 40
वारि दत्वा नवे पात्रे कृतोपस्तरणे शुचौ ।
चरो स्त्रिभाग मादाय सिक्त्वाऽऽज्येन निवेदयेत् ॥ 41
वारि दत्वाऽपरैः पात्रैः भक्ष्य भोज्यादिकं पृथक् ।
कालपक्वंच तेनैव पूर्वव त्प्रतिपादयेत् ॥ 42

किंचि त्तृपरमं त्तत्र पञ्च मन्त्रान् जपन् बुधः ।
वारि दत्वाऽपरैः पात्रै र्मुखवासं समर्पयेत् ॥ 43
स्तोत्रं कृत्वा प्रणम्यैनं दिशि कृत्वा प्रदक्षिणम् ।
भीतवत्पूजयित्वैवं राजवत्पुरुषोत्तमम् ॥ 44
आज्ञांच सत्वमन्त्रेण याचित्वाऽस्त्रेण गोपयेत् ।
अग्निपात्र मुपासाद्य याचयित्वा क्रमात्पुनः ॥ 45
गुणै स्त्रिपरिधीन् न्यस्य पृथिव्यां दक्षिणोत्तरे ।
गन्धपुष्पै रलंकृत्य दिक्पतीन् दिक्षु संगतान् ॥ 46
युगलैः स्वै र्नमस्कारै रभ्यनुज्ञापयेत् द्विजान् ।
पञ्चविंशति मादाय समिधः सर्पिषोक्षिताः ॥ 47
अष्टाक्षरेण मन्त्रेण स्वाहान्तेन सकृत्क्षिपेत् ।
अहंकारै स्त्रिभिः कृत्वा परिषेकं गुणेन च ॥ 48
तस्मिन् रत्नौ[न्नग्नौ?]प्रदीप्तेच ध्यात्वा पद्मं सकर्णिकम् ।
पूर्वोदितेन मार्गेण देवमावाहये त्परम् ॥ 49
अर्घ्यं प्रदाय मनसा स्रुवेण जुहुयाद् घृतम् ।
पीठमन्त्रैः क्रमेणैव स्वाहाकार समन्वितैः ॥ 50
ततो दर्व्या मुपस्तीर्य चरोः पिण्डं निधायच ।
अभिधार्या थ मन्त्रेण जुहुया दविकम्पितम् ॥ 51
स्रुवाहुतीश्च तेनैव जुहुयात् द्वादश क्रमात् ।
वासुदेवेन चाप्येव मष्टा वष्टाक्षरेण च ॥ 52
पुनस्तु दर्व्या जुहुया चरोः पिण्डं घृतान्वितम् ।
रुद्रमन्त्रेण दर्वीं तु प्रक्षाल्य विसृजे त्पुनः ॥ 53

एकां समीधमादाय स्रुवेण जुहुयाद् घृतम् ।
मूर्तिशक्त्यादिभि र्मन्त्रै र्लोकपालावसानिकैः ॥ 54
प्रायश्चित्तानि जुहुया त्पश्चोपनिषदा पुनः ।
पञ्चकृत्वस्तदन्तेन घृतधारां निधापयेत् ॥ 55
अग्निकार्यमिदं विद्वान् ब्राह्मणः कर्तुमर्हति ।
क्षत्रियो वा गुणैर्युक्तो वैश्यो वाऽपि बहुश्रुतः ॥ 56
नाग्निकार्यं प्रयुञ्जीत शूद्रो विद्वानपि क्वचित् ।
दीक्षितः पण्डितो विद्वान् काम मन्येन कारयेत् ॥ 57
ब्राह्मणोऽपि दुराचारः क्षत्रियोऽपि तथाविधः ।
अग्निकार्यं प्रयुञ्जानः प्राप्नोति पर मापदम् ॥ 58
नैमित्तिकेषु काम्येषु दीक्षासु स्थापनेषु च ।
अग्निकार्यं प्रयुञ्जीत नान्यत्र यदि न प्रभुः ॥ 59
परिहोमेषु सर्वेषा मयमेव विधिर्मतः ।
दिक्पतीनां तु जुहुयान्नामभिः स्वै र्घृताहुतीः ॥ 60
दीक्षिता एव जुहुयुः परिहोमं द्विजोत्तमाः ।
आचार्यपदमारूढा दक्षिणाभिश्च तोषिताः ॥ 61
आचार्येण नियोक्तव्या स्त एव परिचारकाः ।
दीक्षायां स्थापने चापि नान्ये तन्त्रेषु दूषणात् ॥ 62
अनिशं विधिना कुर्व न्नग्निकार्य मुपासकः ।
विनाशयति पापानि सिद्धि मष्टौ च गच्छति ॥ 63

इति श्रीपाञ्चरात्रे परमसंहितायां
अग्निकार्यं नाम विंशोऽध्यायः

---

श्रीः

# अथैकविंशोऽध्यायः



ब्रह्मा

स्थापितस्य मुकुन्दस्य त्रिरात्रं किं विधीयते ।
तदन्तेच कथं पूजा कर्तव्या तां ब्रवीहिमे ॥ 1

परमः

स्थापयित्वा तथा देवं परिहोमं विधायच ।
अन्नपान धनादीनि प्रदद्यात्सच[ दद्यादुत्सव? ] पूर्वकम् ॥ 2
बहिश्च विकिरेदन्नं सर्वेभ्यः सर्वसन्धिषु ।
त्रिरात्रापगमे यत्नं स्नपनाय समाचरेत् ॥ 3
उभयो र्द्वारयोर्मध्ये वेदिं कुर्या चतुष्करीम् ।
सर्वत्र सिकताकीर्णां वितानेनोपशोभिताम् ॥ 4
तस्यां कुंभान् प्रति द्रव्य माचार्यः साधये न्नवान् ।
सौवर्णान् राजतान् ताम्रा न्मृण्मया न्वा विभूषितान् ॥ 5
वेद्यां वस्त्राणि विस्तीर्य तेषु पात्राणि साधयेत् ।
सादयित्वा पवित्रेण तोय मुत्पूय ता न्पुनः ॥ 6
उत्तानान् प्रोक्षये त्कुंभान् त्रिरेव परमेष्ठिना ।
ततस्तु द्रव्यैः स्नपनै र्वस्त्रपूतैः परीक्षितैः ॥ 7
आचार्यः पूरये त्सर्वा नावाह्यावाहय मूर्तिपैः ।
पश्चादौ पश्चगव्येन पश्चोपनिषदा क्रमात् ॥ 8
सर्वै रेकं पुनः कुम्भं कुशतोयेन चापरम् ।
मधु तैलेक्षुतोयैश्च गर्भभेदैः प्रपूरयेत् ॥ 9

क्षेत्रतीर्थाच्च शैलेभ्यः सूकराखुविला त्तथा ।
वल्मीका दृषशृङ्गाच्च मृद मादाय पूरयेत् ॥ 10
पूरयित्वाऽथ तान् कुंभान् पूरयेत्पुष्पपल्लवैः ।
गन्धैरत्नैश्च माल्यैश्च यथाविभवमेव वा ॥ 11
पूजाद्रव्याणि सर्वाणि शोधना न्युपपादयेत् ।
वेदे रन्यत्रयुक्ताभिर्दी [नि दी?] क्षितैः परिचारकैः ॥ 12
गर्भागारमथ प्राप्य द्वारमुत्पाट्य वायुना ।
आच्छादनादि देवस्य विश्वेनापनये द्बहिः ॥ 13
विसृज्य देवं प्रथमं नैर्माल्यमपनीय च ।
आचार्यः स्नापयेद् द्रव्य मावाह्याावाह्य दीक्षितैः ॥ 14
स्नपनायोपकॢप्तानि यानि वेद्यां क्रमात्पुरा ।
उद्धृत्य तानि स्नपयेत् देवबिंब विशुद्धये ॥ 15
प्रथमं पञ्चगव्येन पञ्चोपनिषदा क्रमात् ।
म [ध्वा?] ध्यादिभिर्गुणैः पञ्चा द्वनस्पतिरसद्वयैः ॥ 16
गन्धमात्रादिकाः पञ्च मनोऽहंकारबुद्धयः ।
अष्टकानां घृ [स्मृ?] ता मन्त्रा षट्कानांच षडादिकाः ॥ 17
[सात्विकादि] त्रया गवा गुणावा परिकीर्तिताः ।
सर्व द्रव्य समूहस्य पञ्चोपनिषदः स्मृताः ॥ 18
स्नापयित्वाऽल्पशः पूर्वं देवमावाह्य मन्त्रवित् ।
भूयस्तु स्नपनद्रव्यैः सर्वैरेवाभिषेचयेत् ॥ 19
शान्ति तीर्थोदकैः कुर्यात् गन्धपुष्पाम्बुभि स्तथा ।
रत्नतोयेन चाप्यन्ते शान्ति कुर्याद्वरीयसीम् ॥ 20
एभिरेव बलं [जल?] द्रव्यैः स्नापयेदङ्गदेवताः ।
एवं तु स्नपनं कृत्वा पूजामार्गं यथा पुरा ॥ 21

आचार्यः सकलं कुर्या दग्निकार्येण संयुतम् ।
भूतानां बलिदानार्थं हविरन्यं तु पाचयेत् ॥ 22
लौकिकाग्नौ विना मन्त्रै स्तेन बाह्यबलिः स्मृतः ।
अग्निकार्येण संयुक्तं पूजाद्रव्यै र्मनोहरैः ॥ 23
आराधनं प्रयुञ्जीत यथाविभव कल्पितम् ।
भक्ष्य भोज्य निवेद्यादि गन्धपुष्पादिकानि च ॥ 24
उज्वलानि प्रयुञ्जीत स्नपने परमेष्ठिनः ।
तस्यावसाने कुर्वीत बलिदानं विधानतः ॥ 25
काञ्चनं राजतं ताम्रं पात्रमादाय मण्डलम् ।
सादितं प्रोक्षितं वेद्यां सपवित्रेण वारिणा ॥ 26
कृत्वा तस्मिन् द्वितीयेन कुर्वीत हविषासनम् ।
तस्मि न्निष्ठापये द्बिंबं देवस्य परमेष्ठिनः ॥ 27
अलाभे[आचार्यः?] काञ्चनं शुद्धं रत्नं रजतमेव वा ।
गन्धपुष्पादिभिस्तस्य पूजां कृत्वा मनोरमाम् ॥ 28
दीक्षितस्यतु तत्पात्रं शिरसि स्थापये द्गुरुः ।
पूरयेदपरे पात्रे हविः शेषं जलपुतम् ॥ 29
धूपमुष्टिं ध्वजं छत्रं गृह्णीयु रपरे तथा ।
शङ्खदुन्दुभिघोषेण गर्भगेहं प्रदक्षिणम् ॥ 30
प्रक्रम्य देवतास्थाने पाणिना विकिरे द्बलिम् ।
प्रासादस्य बहिश्चैव प्राकारस्य बहि स्तथा ॥ 31
एवमेवं परिक्रम्य बलिपीठं प्रदक्षिणम् ।
भूतेभ्यो नम इत्येव तस्मिंश्च विकिरेद् बलिम् ॥ 32

पुनः प्रदक्षिणं कृत्वा गर्भागारं प्रविश्य च ।
पूजापीठै कदेशेतु तद्बिंब मुपपादयेत् ॥ 33

अनेन बलिदानेन पूजये द्ब्राह्यदेवता: ।
त्रिसन्ध्य मेकसन्ध्यं वा नत्विदं व्यनिपादयेत् ॥ 34

स्थापितस्य हरेर्यत्र बलिदानं विहन्यते ।
तत्र स्थाने न भुञ्जीत वैष्णवे संभवे सति ॥ 35

बलिदानस्य ये विघ्नं कुर्वन्ति पुरुषाधमा: ।
गोवधेन समानंते लभन्ते पापसञ्चयम् ॥ 36

स्थापितस्य तु देवस्य बलिदानान्तमर्चनम् ।
नोपहन्या द्यथाशक्ति स्नपनंतु निमित्तत: ॥ 37

स्थापितस्य चतुर्थेऽह्नि द्वादश्यां विषुवद्दिने ।
यात्रान्ते राहुयोगेच दुर्निमित्तोदये तथा ॥ 38

प्राप्ते जनपदव्याधौ दुर्भिक्षे शत्रुपीडने ।
उत्सवे चार्ध वृत्तौच [थ वृद्धौतु?] चिरलुप्तेच पूजने ॥ 39

चोर पातकि चण्डाल कुत्सित स्पर्शनेषु च ।
प्रासादस्थस्य मरणे दुर्यश: सा भवेत्तथा[संभवे तथा?] ॥ 40

एवमादिषु चान्येषु निमित्तेषु यथायथम् ।
स्नपनं देवदेवस्य कारयेद्विधिपूर्वकम् ॥ 41

सर्वशान्तिकरं ह्येत त्सर्वपापप्रणाशनम् ।
स्नपनं पद्मनाभस्य कर्तव्यं कुशलार्थिभि: ॥ 42

पात्र वस्त्रादिकं सर्व माचार्याय समर्पयेत् ।
यथा संभवमन्यच्च वैष्णवेभ्यश्च दक्षिणे[णाम्] ॥ 43

चतुर्थो दिवसादूर्ध्वं नित्यमाराधयेद्धरिम् ।
अग्निकार्यं च कुर्वीत [बलिदानं च देशिक:] ॥ 44

यत्रस्थाने हरिर्नित्यं विष्णुभक्तैरुपास्यते ।
तत्र नैवोपगच्छन्ति पिशाचग्रहराक्षसाः ॥ 45
यत्रोपकरणैः शुद्धै र्नित्य माराध्यते हरिः ।
सुकुमाराः प्रजास्तत्र जायन्ते रोगवर्जिताः ॥ 46
व्याधिता ये प्रपद्यन्ते तत्स्थानं वैष्णवा नराः ।
तेऽपिरोगाद्विमुच्यन्ते लभन्ते भेषजानिव ॥ 47
प्रासादे स्थापितं देवं सर्वदा न प्रकाशयेत् ।
अन्यत्रार्चनवेलाया नहि तत्प्रीयते हरिः ॥ 48
अशुचिद्रव्यसंसर्गं जनसंसर्गमेवच[वा ?] ।
प्रासादे वर्जयेद्विष्णो र्लोकोपकरणानिच ॥ 49
नित्यमाराध्य संरक्षेत् पूजाद्रव्याणि वैष्णवः ।
प्रासादद्वारमावृत्य निर्गच्छेदिच्छया बहिः ॥ 50
स एवं स्थापयेद्विष्णुं प्रासादे विधिपूर्वकम् ।
वर्गात्प्राक्च्यवते नासौ यावत्तं नापि नश्यति ॥ 51

कर्तारो यदि भूयांसः प्रासादस्य स्युरञ्जसा ।
[कार्याणामपि] बाहुल्यात् तत्रापि फलमेधते ॥ 52
एतत्ते सर्व माख्यातं स्थापनं परमेष्ठिनः ।
अत ऊर्ध्वं प्रवक्ष्यामि यात्रामस्य पितामह ! ॥ 53

इति श्रीपाञ्चरात्रे परमसंहितायां
स्नपनं नाम एकविंशोऽध्यायः

---

श्रीः

# अथ द्वाविंशोऽध्यायः

परमः

स्थापितस्यापि देवस्य यात्राविधि मतःपरम् ।
श्रुणु ब्रह्म न्यथान्यायं निमित्तं शकुनान्वितम् ॥ 1

द्वि प्रकारा स्मृता यात्रा देवस्य कमलोद्भव ! ।
आद्या तीर्थाभिषेकार्था द्वितीया वास्तुसिद्धये ॥ 2

स्थापितः पुण्डरीकाक्षः प्रासादे वैष्णवै र्नरैः ।
तीर्थस्नानाय नेतव्यः संभवेद्यत्र निम्नगा ॥ 3

स्थापितो प्युत्सवान् प्राप्य तीर्थे स्नात्वा गृहंगतः ।
प्रसीदति परोदेवो नान्यथा पद्मसंभव ! ॥ 4

जलाधिवासादारभ्य यज्ञोऽयं विधिचोदितः ।
विज्ञेयो वैष्णवो नाम तीर्थयात्रावसानिकः ॥ 5

तत्रादावेव कुर्वीत नृत्त गीत समन्वितम् ।
उत्सवं द्वादशाहानि काम मूर्ध्वंतु कारयेत् ॥ 6

उपश्रुतिरु[मु?]पश्रुत्य शकुनान्युपलक्ष्य च ।
निमित्तानि विदित्वा च यात्रारंभं प्रयोजयेत् ॥ 7

तिथिनक्षत्रहोराश्च लभ्यन्ते सद्गुणा यदा ।
यजमानानुलोम्ये[कूल्ये]न दिङ्खस्य च सर्वतः ॥ 8
मु

यदैतानि शुभान्येव संभवन्ति कदाचन ।
तदा यात्रां प्रयुञ्जीत विधिमार्गेण शार्ङ्गिणः ॥ 9

यस्मिन् जपति[भवति] नक्षत्रे सर्वमेत द्गुणान्वितम् ।
तस्य कुर्वीत पूर्वेद्यु रुत्सवं बहुविस्तरम् ॥ 10

छत्रै ध्वजपटैः शुभ्रैः केतुयष्टिशिरोधृतैः ।
तोरणै र्दीपिकास्तंभै र्दिङ्मुखानि विभूषयेत् ॥ 11
सर्वासां देवतानांच तस्मिन् स्थाने विशेषतः ।
कारये न्महतीं पूजां चरुभि र्बलिभिस्तथा ॥ 12
तत्र सायं प्रकुर्वीत ग्रामान्ते च महाबलिम् ।
शङ्खदुन्दुभि निर्घोषै र्महाजन पुरस्कृतम् ॥ 13
भक्ष्यभोज्यान्नपानानि विकिरेत्सर्ववर्त्मसु ।
आरामेषु वनान्तेषु देवतायतनेषु च ॥ 14
एवं महाबलिं दत्वा कृत्वा रात्रौ महोत्सवम् ।
आचार्यः प्रात रुत्थाय स्नात्वा देवं समर्चयेत् ॥ 15
तस्यावसाने देवस्य यात्रार्थं बिंब मानयेत् ।
काञ्चनं राजतं ताम्रं न त्वन्य त्तत्र चोद्यते ॥ 16
शङ्खचक्रसमायुक्त मल्पकायं मनोरमम् ।
रथं वा कुञ्जरं वाऽस्य यात्रावहन मानयेत् ॥ 17
नाना वादित्रकुशलान् बहूंश्च परिचारकान् ।
छत्रध्वज वितानांश्च भेरीपटहतालकान् ॥ 18
शिल्पिनः सेवकांश्चापि गणिका देवदासिकाः ।
एवमेत त्समानीय मुहूर्ते शोभने गुरुः ॥ 19
शिष्यै श्चतुर्भिः संयुक्तः प्रासानुज्ञो द्विजोत्तमैः ।
देवं प्रदक्षिणीकृत्य प्रणिपत्य पुरःस्थितम् ॥ 20
तीर्थयात्रां कुरुष्वेति कार्यं विज्ञापये च्छनैः ।
ततः संहृत्य तद्बिंब मुत्पाद्य विधिपूर्वकम् ॥ 21
तस्मि न्नावहये द्देवं पूजाकाले यथोदितम् ।
आवाहित मनुस्मृत्य दत्वाऽर्घ्यं विधिपूर्वकम् ॥ 22

छादयेदंशुकेनैव महतेन दशावना ।
दक्षिणेन तमादाय पाणिना वाग्यनः स्वयम् ॥ 23
शिष्यैः परिवृतो गच्छे द्गर्भागारा द्बहिः पुनः ।
उदपात्रं वहेदेकं छत्रमेकः समुच्छ्रितम् ॥ 24
यागोपकरणान्येको हविरेकश्च धारयेत् ।
बहिर्निष्क्रम्य घोषेण महतावाग्यतः स्वयम् ॥ 25
सन्निधानं समासाद्य कुञ्जरस्य रथस्य वा ।
गरुडं वाहयित्वैन मारोहेयुरनाकुलाः ॥ 26
तत्र ते वाग्यताः सर्वे सोत्तरीयाः स्वलंकृताः ।
महाजनेन संवीता गच्छेयु र्यत्र निम्नगाः ॥ 27
दिङ्मन्त्रेण बहिर्ग्रामं कृत्वा पूर्वं प्रदक्षिणम् ।
निर्गच्छे द्योजना दर्वा गत ऊर्ध्वंतु वर्जयेत् ॥ 28
अन्तराले महाघोष गीत नृत्त प्रणादितैः ।
वाहनै र्विविधै श्चापि कुर्वीर न्देवतुष्टये ॥ 29
तीर्थपार्श्वे समासाद्य वेदिं पूर्वंतु कारयेत् ।
वाहना दवतार्यैनं तस्यामेव निवेशयेत् ॥ 30
हविश्च श्र[दा?]पयेत्तत्र पायसं विजने क्वचित् ।
पाद्य माचमनं चा स्मै दत्वाऽर्घ्यं प्रतिपाद्यच ॥ 31
सर्वेणादाय मातङ्ग मारोप्य सरितं नयेत् ।
वारिमन्त्रेण तीर्थानि तत्रावाह्य समंततः ॥ 32
परमेष्ठ्यात्मना मज्जेत् तं गृहीत्वा त्रिरंभसि ।
निवृत्य वेद्यां दद्याच्च पाद्यमाचमनं तथा ॥ 33
प्रोक्षयेत्पञ्चभिर्मन्त्रैः कुशपाणिः समाहितः ।
पुन रघ्येन मादाय तोये कृत्वाऽघमर्षणम् [णान्?] ॥ 34

महाजनैः सहस्नायात् ब्राह्मणानां तु वाङ्म्यान् [वाञ्छया]।
उत्तीर्य देव मानीय गन्धपुष्पैः समर्चयेत् ॥ 35

पाद्यमर्घ्यं निवेद्यंच दत्वाऽस्मै विधिपूर्वकम् ।
तस्मादन्ते नमादाय पूर्ववद्वाहनं नयेत् ॥ 36

तमारुह्य यथा पूर्वं निवर्तेताविलम्बितम् ।
यात्रादिवस एवैनं प्रासादं हरिमानयेत् ॥ 37

अन्यथाहि महान् दोषो कर्तृणां भवति ध्रुवम् ।
आगत्य पूर्ववद्ग[त्क्]त्वा गत्वा गर्भगृहान्तरे ॥ 38

मूलबिम्बे परं देवं सर्वेण प्रतिरोपयेत् ।
गन्धपुष्पोदकै दैवं बुध्यावाह्य समन्त्रकम् ॥ 39

स्नापये त्तेन तद्दिवं यात्राभावं [दावन्तत]ततस्ततः ।
अलं[एवं] कृत्वा समाराध्य दत्वाऽर्घ्यं प्रणिपत्यच ॥ 40

गर्भागारं समावृत्य स्वेच्छया निष्पते द्धहिः ।
भक्ष्यभोज्यान्नपानैश्च ब्राह्मणांस्तर्पये द्धहिः ॥ 41

आशिषो वाचये द्विप्रै रत्नदानेन तोषितैः ।
आचार्याय सशिष्याय दत्वा तत्रैव दक्षिणाम् ॥ 42

विसृजे देवमाख्यातं तीर्थस्नानं मया तव ।
द्वितीयामपि ते यात्रां कथयिष्यामि शार्ङ्गिणः ॥ 43

यस्यां निमित्तमुद्दिष्टं वास्तुनिर्माणमादितः ।
प्रासादे शिथिले भग्ने गर्भागारेऽपि वा हरेः ॥ 44

छिन्ने जीर्णेऽपिवा बिम्बे यात्रां देवस्य कारयेत् ।
प्रागुदग्वा गृहं कृत्वा काष्ठैरभिनवैः शुभैः ॥ 45

प्रेत्य द्वारं सु संगुप्तं चतुरश्रं मनोरमम् ।
पीठं काष्ठमयं तस्य मध्यदेशे निधापयेत् ॥ 46

तस्मिन् लोहमयं बिंब मल्पकायं चतुर्भुजम् ।
चित्रं कृत्वा समास्थाय निश्चलं कारयेत्पुनः ॥ 47
अथ पुण्येऽहनि प्राप्ते पूजयित्वा द्विजोत्तमान् ।
पुण्याहं वाचयित्वा च शान्तिं कृत्वा विशुद्धये ॥ 48
आददीत महत्पात्रं सौवर्णं राजतं तथा ।
ताम्रं वा तत्र निक्षिप्य हेमरत्नानि शक्तितः ॥ 49
गन्ध पुष्पाक्षतादीनि पवित्राणि च सर्वतः ।
शुद्धेन वारिणा पूर्वं कृत्वाऽलंकृत्य सर्वतः ॥ 50
देवस्याराधनं कुर्या द्यत्नेन महता पुनः ।
तस्यावसाने निर्गच्छे दाचार्यो भवनं नवम् ॥ 51
सर्वत स्तदलंकृत्य गन्ध पुष्पाङ्कुरादिभिः ।
अन्तःप्रविश्य कुर्वीत शारीरं ध्यान मात्मनः ॥ 52
तत्र योगमयं पीठं ध्यात्वा बिंबं च पूर्ववत् ।
अर्चा गावाहनं कृत्वा रक्षां कृत्वा बहि र्व्रजेत् ॥ 53
प्रासाद द्वार मासाद्य प्रष्टव्या स्तस्य कारकाः ।
कियन्तं काल मेतस्मि न्नल्पगेहे जनार्दनः ॥ 54
क्लिष्टवासे निवसति क्रोधं नेच्छे त्तथा वुधः ।
ततोऽर्वागपि निर्देश्यः तस्मात्कालोऽपि तै र्नरैः ॥ 55
मासा दूर्ध्वं तु निर्देश्य ततोऽर्वागि[ति?] नेष्यते ।
अथ तं पात्र मादाय गर्भागारं प्रविश्य च ॥ 56
तस्मि न्नावाहये द्देवं सर्वेण पुरुषोत्तमम् ।
तै रुक्तं मनसा ध्यात्वा काल निर्देश मञ्जसा ॥ 57
तत्पात्रं मूर्ध्नि विन्यस्य शङ्ख दुन्दुभि निःस्वनैः ।
प्रदक्षिणं परिक्रम्य गच्छे दभिनवं गृहम् ॥ 58

नच प्रदक्षिणं कृत्वा गच्छे दन्तः समाहितः ।
ब्राह्मणा नप्यनुज्ञाप्य काल मुक्त्वा पुरोदितम् ॥ 59

पञ्चोपनिषदान्[दा] ध्यात्वा सर्वेण ध्याययेद्धरिम् ।
सान्निध्य मर्थयित्वा च पाद्यदानानि पूर्ववत् ॥ 60

कुर्वीत सकलं मन्त्रै रग्निकार्यसमन्वितम् ।
तस्यावसाने सर्वेषा मन्नपानानि दापयेत् ॥ 61

दक्षिणांच यथा शक्ति वाचये दाशिषस्तथा ।
रत्न धातु निधानादि नात्र कुर्वीत मन्त्रवित् ॥ 62

स्थापनं मुख्यमेव स्यात् यत्कृतं तेन वर्त्मना ।
तस्मा न्निधान रहितं क्षुद्रोपकरणान्वितम् ॥ 63

केशवासमिव प्रासं कल्पये त्कार्यसिद्धये ।
प्रासादे गर्भगेहे वा पुन रुत्पादिते शुभे ॥ 64

उदपात्रे तथैवैन मावाह्य स्थापयेत्पुनः ।
प्रतिमायां तु नष्टायां ब्राह्मणाना मनुज्ञया ॥ 65

आचार्यः प्राङ्मुखो भूत्वा विष्वक्सेनमनाः स्वयम् ।
गत्वा तूत्थापये द्बिंबं परिचारक संवृतम् ॥ 66

स्वयमेव तु गृह्णीया न्मूलरत्नानि सर्वशः ।
यानमारोप्य तद्बिंबं नीत्वा सह जलाशये ॥ 67

तस्य मध्येतु विसृजे द्विष्वक्सेन मनु स्मरन् ।
कारयित्वा नवा मन्यां प्रतिमां लक्षणान्विताम् ॥ 68

जलाधिवासनाद्येव तन्त्रचोदित माचरेत् ।
बिंब संस्कार माचार्यः सर्व मावाहना द्विना ॥ 69

कृत्वा पीठंच कुर्वीत रत्नधातु निधापनैः ।
तत्र बिंबं प्रतिष्ठाप्य निश्चलं कारये त्पुनः ॥ 70

योगपीठं ततो ध्यात्वा देव विग्रहमेव च ।
बाह्यागारा त्ततो देव मुदपात्रे समाह्वयेत् ॥ 71
मुहूर्ते शोभने प्राप्ते तद्बिंबं नतु शोधयेत् ।
अनष्टे मूल बिंबेतु वास्तु निर्माय सर्वतः ॥ 72
पञ्चगव्यादिभि र्द्रव्यैः क्षालयित्वा समंततः ।
तस्मि न्नेवोदपात्रे तु देवमाहूय योजयेत् ॥ 73
बिंबानां भग्न जीर्णानां दूषितानां च कश्मलैः ।
उद्वासनं प्रयुञ्जीत नान्यथा बिम्ब मुद्धरेत् ॥ 74
इत्येवं द्विः प्रकारापि यात्रा देवस्य कीर्तिता ।
आनुपूर्व्येण ते ब्रह्मन् किं भूयः श्रोतुमिच्छसि ॥ 75

इति श्रीपाञ्चरात्रे परमसंहितायां
यात्रा नाम द्वाविंशोऽध्यायः

श्रीः

# अथ त्रयोविंशोऽध्यायः

ब्रह्मा

बिम्बानां लक्षणं ब्रूहि प्रमाणैः सकलैः सह ।
अङ्ग प्रत्यङ्ग विन्यासं पीठ लक्षणसंयुतम् ॥ 1

परमः

सुवर्णादीनि बिम्बस्य द्रव्याणि कथितानि ते ।
शोधयित्वाऽग्रतस्तानि शिल्पिभिः कारयेद् दृढम् ॥ 2
द्रावयित्वा सकृत्सिक्तं (कथं?) सुवर्णं सर्वतो घनम् ।
देवबिम्ब मुपादेय मन्यथा न शुभावहम् ॥ 3
खदिरः पनसश्चापि मधूक श्चन्दनं तथा ।
सरलो देवदारुश्च जातीकाष्ठा स्तथाऽसनः ॥ 4
तिमिश श्चन्दनश्चेति प्रशस्ता वृक्षजातयः ।
ऋजु स्निग्ध समाकारा न शिखा निर्व्रणा घनाः ॥ 5
परिपक्वा नवा शुष्का वृक्षछेदाः शुभावहाः ।
सुप्रशस्ते शुचौ देशे खनित्वा भूमि मुद्धृता ॥ 6
शीतलातु शिलाग्राह्या दुष्टलक्षण वर्जिता ।
इष्टा[दुष्टा?] गर्भवती ज्ञेया भिद्यते शिथिलध्वनिः ॥ 7
मण्डलैश्च त्रिधाह्येव नानावर्णा च कीर्त्यते ।
काक गृध्र कपि श्वान सर्पवृश्चिकमूषिकाः ॥ 8
यदि चिह्नेन लक्ष्यन्ते तलायां सा न शोभनम् ।
अन्येन दूषिता भावात् लक्ष्यन्ते यदि कुत्र चित् ॥ 9

अष्टगर्भातु सा ज्ञेया कुलक्षयकरी शिला ।
शङ्खचक्र गदापद्म छत्र तोरण वारणाः ॥ 10
सिंह सूकर सारङ्ग श्रीवत्साङ्कुश कुण्डिकाः ।
दृश्यन्ते यदि पाषाणे तद्भविष्यति शोभने[नः?] ॥ 11
अन्यानि च शुभान्येव अशुभा न्यशुभानि च ।
शिलायां क्षालितायां तु यदि किंचिन्नलभ्यते ॥ 12
मध्यमा सा शिला ज्ञेया सर्वत्र सुष[स?]मा घना ।
रूपतो यदि लक्ष्यन्ते तिलतण्डुलवालुकाः ॥ 13
नच रेखाप्रदेशेषु विज्ञेया साऽपिमध्यमा ।
शिल्पीनांच प्रमादेन वातातपवशेन च ॥ 14
शिलाकाष्ठानि वालूका दारुणै रपि ताडनैः ।
गन्धे वर्णे तथा स्पर्शे शब्दे च यदि किंचन ॥ 15
लक्ष्यन्ते न क्वचिद् द्रष्टुं सर्वे वर्णेषु सा शुभा ।
मृत्तिकाप्येवमेव स्या दुक्तकर्म यथा भवेत् ॥ 16
अकुत्सिता दायतना दुष्कृता सातु शोभना ।
एवमेभिः शुभैर्द्रव्यै रूपं देवस्य यत्कृतम् ॥ 17
तन्त्रे यं बिम्बमर्चेति बेरंच प्रतिमेति च ।
प्रासादे भवने चापि प्रमाणं तस्य भिद्यते ॥ 18
जङ्गमस्यापि सर्वस्य चित्रे लेखार्पितस्य च ।
प्रमाणं त्रिविधं प्रोक्तं तस्य शास्त्रे पितामह ! ॥ 19
ऊर्ध्वे तिर्यक् समन्ताच्च तार्दिवं येन मीयते ।
उन्मानं प्रथमं प्रोक्तं विमानं तदनन्तरम् ॥ 20
तृतीयं परिमाणं तु शास्त्रेऽस्मिन् कमलोद्भव ! ।
त्रिभिरेतैः प्रमाणैस्तु यत्परिच्छिन्न मञ्जसा ॥ 21

नचित्रमिति विज्ञेयं पूजनीयं च पण्डितैः ।
परिमाणार्थ निष्पन्न मचित्रं वन्द्य मिष्यते ॥ 22
चित्राभासमितिप्राहुः परिमाण विवर्जितम् ।
भक्तानां दर्शनार्थाय क्रियते यन्मनोरमम् ॥ 23
वर्णकैः पटकुड्यादौ तदाहुर्भक्तिवर्धनाम् ।
वर्धनां अर्भकाणां च स्त्रीणां च हृदयंगमम् ॥ 24
अचित्रं स्थापये त्कृत्वा काष्ठेन शिलयापि वा ।
प्रासादे स्थापये चित्रं भवने वा विभूतये ॥ 25
जङ्गमं वा ऽर्चयेन्नित्य मावाह्यच विसृज्य च ।
वातायनपथं गत्वा ये भान्ति रविरश्मयः ॥ 26
तत्र सूक्ष्मं विसर्पन्तो रेणवः परमाणवः ।
परमाण्वष्टकं केशो लिख्या केशाष्टकं भवेत् ॥ 27
लिख्याष्टकं भवेद्यूका तथा यकाष्टकं यवा ।
अङ्गुलं प्राहुरष्टाभिर्यवैः प्रमितमञ्जसा ॥ 28
तालं वितस्तिमप्याहु र्द्वादशाङ्गुल सम्मितम् ।
ताले द्वेहस्तमिच्छन्ति पञ्चहस्तं तु पूरुषम् ॥ 29
पञ्चहस्त प्रमाणात्तु नाथि[धि?]कं बिंबमिष्यते ।
एकहस्ता न्नच न्यूनं प्रासादे स्थाप्यते हि मे ॥ 30
भवने स्थाप्यमानं तु नैकहस्ता त्परं भवेत् ।
विन्ध्यायां च...... 31

शरीर न्यासकाले च नमस्कारे च तर्पणे ।
मौनं कुर्या त्प्रयत्नेन नाप्नोति फलमन्यथा ॥ 32
[ सौवर्णो राजतस्ताम्रो खादिरोवा स्रुवो भवेत् ।
आद्यमैश्वर्य सिध्यर्थं राजतं कीर्तिवर्धनम् ॥ 33

ताम्रं शान्तिकरं प्रोक्तं ग्वादिरं वसुवर्धनम् ।
द्वादशाङ्गुलमायामं मूलविष्कंभमङ्गुणम् [ङ्गुलम् ?] ॥ 34

विष्कंभात् द्विगुणं वृत्तं विष्कंभस्य दलं गुणे [गले] ।
यवमाना वुभौ गतौं गर्ते वृत्तौ पृथक् पृथक् ॥ 35

विष्कंभा त्पादहीनं स्या द्गर्भसीमाय वा दलम् ।
गोपुच्छ सदृशं दण्डं नासिकापुटव त्पुटम् ॥ 36

स्रुवस्य कारयेद्विद्वान् स्रुचंच सममायनम् ।
विष्कंभात् त्रिगुणं वृत्तं विष्कंभात् द्विगुणं गलम् ॥ 37

भागा न्कुर्या त्पुनः पञ्च द्विभागं चाननं भवेत् ।
दण्डमानं भवेच्छेषं गर्तवृत्तं मुखाद्दलम् ॥ 38

उभोष्ठ सदृशं त्वग्र्य माज्यमार्गं च कारयेत् ।
यवमानं भवेन्मूलं यवार्धं चाग्रमिष्यते ॥ 39

भोजनादिषु सर्वेषु दद्यादर्ध्यमतीन्द्रियः ।
अभिधार्याभिमृश्याऽपि मन्त्रमष्टाक्षरं जपेत् ॥ 40

उक्ता परमहंसंच शुद्धभूमौ निधापयेत् ।
व
दद्याच्छेषं [देवं?] विधानेन तेन नश्यन्ति[ति] किल्बि-
षम् ॥ 41

उपस्थाय रसेनान्न मभिमृश्य तथांभसा ।
वायुमन्त्रैस्तु भुञ्जीत पञ्च प्राणाहुती र्बुधः ॥ 42

प्राणापान स्तथाव्यान उदानंच समानवान् ।
वायुमन्त्रेण विज्ञेया पञ्च मन्त्रा स्वनामभिः ॥ 43

भुक्ता तोयं पिबे त्तेन हस्तशुद्धिं च कारयेत् ।
व
अर्चयित्वा परं देवं नित्य मव्यग्रया धिया ॥ 44

---

* मङ्गलम्
गु

स्तुतिकाले तु संप्राप्ते स्तोत्रमेतदुदाहरेत् ॥ 45
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ! ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ! ॥ 46
देवानां दानवानांच सामान्य मधिदैवतम् ।
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥ 47
एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ।
अध्यक्षा[1] चानुमन्ताच गुणमाया समावृतः ॥ 48
संसार सागरं घोरमनन्त क्लेश भाजनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥ ]
[ मनास्विनः ॥ ] 49

[ इतः प्रभृति ग्रन्थपातान्तो भागः एकोनत्रिंशे अध्याये कर्मशेषप्रकरणे परिदृश्यते. बिम्बलक्षणाध्याये अस्य अनौचित्यमिव भाति, अतः तत्रैव द्रष्टव्यः । ]

न ते रूपं नचाकारो नायुधानि नचास्पदम् ।
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥ 50
नैव किंचित्परोक्षं ते प्रत्यक्षोऽपि न कस्य चित् ।
नैव किंचिदसिद्धं ते नच सिद्धोऽसि कस्यचित् ॥ 51
कार्याणां कारणं पूर्वं वचसां वाच[च्य?]मुत्तमम् ।
योगिनां परमासिद्धि नैपरं ते परं विदुः ॥ 52
अहं भीतोऽस्मि देवेश संसारेऽस्मिन् भयावहे ।
पाहि मां पुण्डरीकाक्ष ! न जाने शरणं परम् ॥ 53
कालेष्वपिच सर्वेषु दिक्षु सर्वासु वाऽच्युत ! ।
शरीरे च गतौ चापि वर्धते मे महद्भयम् ॥ 54

१. अध्यक्षश्चानु ।

त्वत्पाद्कमलादन्यं नमे जन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥ 55
विज्ञानं यदिदं प्राप्तं यदिदं स्थान मार्जितम् ।
जन्मान्तरेऽपि मे देव मा भूदस्य परिक्षयः ॥ 56
दुर्गतावपि जातायां त्वद्गतो मे मनोरथः ।
यदि नाशं न विन्देत तावताऽस्मि कृती सदा ॥ 57
न काम कलुषं चित्तं मम ते पादयोः स्थितम् ।
कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥ 58
इत्येव मनयास्तुत्या स्तुत्वा देवं दिने दिने ।
किंकरोऽस्मीति चात्मानं देवायैवं निवेदयेत् ॥ 59
पूजाद्रव्यावशेषेण पूजये दात्मनस्तनुम् ।
पूजापीठोपकण्ठे तु स्वयमासीत विष्टरे ॥ 60
यथा नराणा मुत्कृष्टं यथा वा परमं गुरुम् ।
आराधयति यत्नेन तथा देवं त[स?]मर्चयेत् ॥ 61
अग्निकार्ये तु होमस्य त्रीणि द्रव्याणि पद्मज ! ।
समिधो हवि राज्यंच तै र्नित्यं होममाचरेत् ॥ 62
पुष्पाणि लोकपालानां दिशासु विदिशासु च ।
पूजा द्रव्याणि योज्यानि सर्वदा होममाचरेत् ॥ 63
काम्ये नैमित्तिके चापि पक्वहोमो विधीयते ।

अतःपरं ग्रन्थपातः

इति श्री पाञ्चरात्रे परमसंहितायां बिम्बलक्षणं नाम त्रयोविंशोऽध्यायः ।

---

श्रीः

# अथ चतुर्विंशोऽध्यायः ।

——:०:——

निद्रया पीड्यते यद्वा गर्वं वा प्रतिपद्यते ।
यथैत....न शात्रेण सिध्यतीभीप्सितं मम ॥ 1

स्वेच्छया कृतमप्येवं हन्तुं शक्नोति किल्बिषम् ।
एवं चिन्तयत स्तस्य नाधर्मे वर्तते मतिः ॥ 2

इन्द्रियाणां स्वभावेन सुखमेवानुधावति ।
तस्मा द्विद्वा नुपासीत न रूपं पारमार्थिकम् ॥ 3

अच्युतस्य परोक्षं त दिति किं त(चि?)दनुस्मरेत् ।
औपकारिक मेवास्य रूप माराधयेद्बुधः ॥ 4

अनुध्यायन् वदेच्चापि तथास्यु रमिते मती (यथास्य रमते मतिः?) ।
तस्मा दाकार मुद्दिष्टं न परित्यज्य पण्डितः ॥ 5

परं देव मुपासीत मुक्तयैव फलाय वा ।
स्वरूपं चास्य तन्त्रेऽस्मिन् कथितं यन्मया तव ॥ 6

तदेव पूजये न्नित्यं नतु बुद्धिविकल्पितम् ।
अभिषेके स्वदेहस्य शान्ति माज्ञा [मन्त्रान्?] प्रयोजयेत् ॥ 7

गुप्त्यर्थं मात्मरक्षायां द्रव्य शुद्धौ च पावनात् ।
समिदाज्यं न होमेषु योजये देवताश्रयात् ॥ 8

कथितेनैव रूपेण ध्यायेत तमहर्निशम् ।
यथा प्रसाद माकांक्षन् सेवेत सततं ध्रुवम् ॥ 9

अभ्यासाच्च भवन्त्येते न कदा प्यविचिन्तयेत् ।
ध्यानेनैव हरेरूपे कुर्यात्परिचयं सदा ॥ 10

ततोऽस्य वर्धते भक्ति स्ततः स्नेहोऽस्य जायते।
अनपायी भवत्येव देवदेवस्य पादयोः॥ 11

पूजकः सर्वकालेषु च्यवते स्थानतोऽन्यथा।
मन्त्रै रावर्त्यमानैस्तु विष्णुपाद समाश्रितैः॥ 12

स्वरूपं लक्ष्यते बुद्धौ भक्तिरस्य तथा[तो?] भवेत्।
भक्त्यर्थाः सर्वमन्त्रास्तु भक्त्यर्थं नित्यमर्चनम्॥ 13

ध्यानं च प्रणिधानं च सर्वं भक्त्यर्थमिष्यते।
यद्यस्य हृदयं तीव्रं सहसा भजते हरिम्॥ 14

अप्रिये वा प्रिये वापि स भक्त इति कीर्त्यते।
प्रियाणि चिन्तये द्यस्तु देवदत्तानि मानवः॥ 15

न स्वशक्त्यैव लब्धानि स भक्तः परमेष्ठिनः।
मम पूर्वकृतैः पापै रेतदप्रिय मागतम्॥ 16

इत्यप्रियेषु यः पश्ये द्विष्णुभक्तः ससम्मतः।
एवं भक्ति निवृत्त्यर्थे [विवृद्ध्यर्थं?] विद्वांसोऽपि जना-
र्दनम्॥ 17

रूपवन्त मुपासीरन् नान्यथा सिद्धिकाम्यया [माप्नुयुः?]।
अव्यक्ताद्याश्च ये भावा देहान्ताः कथिता मया॥ 18

तानतीत्य स्थितोप्येषो देव श्चिन्त्य शरीरवान्।
तस्य योगमयं विद्या दाकारं सर्व वस्तुकम्॥ 19

भक्तानामनुकम्पार्थं नतु सत्येन निष्ठितम्।
आयुधाभरणोपेतं सांशुकं दोर्भिरुज्वलैः॥ 20

सत्यरूप मिव ध्याये त्प्रथमं पुरुषोत्तमम्।
कर्ममध्ये विशेषेण वर्तमानस्य देहिनः॥ 21

इदमेव हरेरूपं ध्यानव्यं नान्य दन्वहम् ।
यद्रा निवृत्तः कर्मभ्यः संयतं रमते मनः ॥ 22

नदा सूक्ष्मशरीरंतु पूजयेत्पुरुषोत्तमम् ।
शक्तयः[1] साधुकारो[वा] विज्ञेया बाहवो दिशः ॥ 23

द्यौ रुत्तमाङ्ग माकाशं जठरं पृथिवी पदम् ।
दृष्टिः सूर्यो मन श्चन्द्रः प्राणं चास्य शरीरिणः ॥ 24

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एवच ।
नित्यः सर्वगतः स्थाणुः पूजनीयो मनीषिभिः ॥ 25

यत्कृतं परमं रूप मनिर्देश्य मलक्षणम् ।
न तस्य पुरुषः पूजा मिच्छेद्विबुधोऽपि सन् ॥ 26

देवं ध्यात्वा परो[रं?] धर्मः[र्मैः?] प्रणवाद्यैः परैः परैः ।
ध्यायन् परोक्षं तदिति आवृत्तेत स पण्डितः ॥ 27

यदा यदातु लभते प्रसादं बुद्धिगोचरम् ।
तदा तदा वपुः सूक्ष्मं ध्याये देवस्य संयतः ॥ 28

वेद वेदाङ्ग विद्यानां पारगः सुबहुश्रुतः ।
संशयेनैव कार्येषु ध्रुवं सीदति पद्मज ! ॥ 29

आगमार्थं दृढं कुर्या त्सर्वविद्याभि रात्मवान् ।
विवेकेन च शुद्धेन नागमस्यैव विप्लवम् ॥ 30

विनिर्धूतागमोहत्येष देहयन्त्रवशो स्थितः ।
अप्राप्य शरणं किंचित् कावसीदति बुद्धिमान् ॥ 31

सूक्ष्मात्स्थूलमिदं जातं शरीरं ह्यस्य साधनम् ।
देवोऽपि सदृश स्तस्य साध्यो भवितु मर्हति ॥ 32

---

१. शक्तयस्त्वायुधा

ततःस्थूल क्रमेणैव सूक्ष्ममर्थं हरेः कथम् ।
तथाहि वपुरप्यस्य जायते जन्मभिः शुभैः ॥ 33
यस्तुविह्वानुपासीत श्रीकामं परमेष्ठिनः ।
विधानं तस्य वक्ष्यामि संक्षेपेण पितामह ! ॥ 34
हेम प्राकार संवीतं प्रासादं हेमनिर्मितम् ।
ध्यात्वा रत्नमयीं भूमिं देवताभि रधिष्ठिताम् ॥ 35
तस्य मध्येतु वैकुण्ठं रक्त पद्मे सुखासितम् ।
चतुर्भुजमनुध्याये त्सुप्रसन्न मृदुस्थितम् ॥ 36
द्वारपालास्थितैर्द्वारं चतुर्भिस्तोरणोज्वलैः ।
आसन्नाननुगृह्णन्तं कामदानेन पूजकान् ॥ 37
पूजकान् परिवारांस्तु पूर्वमेव मयेरितान् ।
अचिरेणैव कालेन श्रियं प्राप्नोति सुस्थिराम् ॥ 38

इति श्रीपाञ्चरात्रे परमसंहितायां
विह्वत्पूजा नाम
चतुर्विंशोऽध्यायः

---

श्रीः

# अथ पञ्चविंशोऽध्यायः

ब्रह्मा

ये नरा ज्ञानयोगेन न शक्या स्त्वा मुपासितुम् ।
सर्वदा भक्तियुक्ताश्च किं तेषां परमं हितम् ॥ 1

परमः

तेषामभिगमो धर्मो विहितः कमलासन ! ।
तीर्थानां शुद्धिहेतूनां वैष्णवानां च वर्त्मना ॥ 2
ज्ञानिना मवियुक्ताना मिच्छतां धर्ममुत्तमम् ।
अभिगम्यानि तीर्थानि पावनानि समंततः ॥ 3
यत्र देशे प्रसीदन्ति करणा न्यस्य देहिनः ।
त त्तीर्थमिति विज्ञेयं नराणां पापनाशनम् ॥ 4
यथा तेषामभिगमाद् धर्मवृद्धिर्भविष्यति ।
तथा ते कथयिष्यामि लोकानुग्रहकाम्यया ॥ 5
तीर्था न्येकाहसाध्यानि द्व्यहःसाध्यानि वा नच ।
पावनानि भविष्यन्ति त्र्यहात्प्रभृति पावनम् ॥ 6
दशभ्यो योजनेभ्योर्वाऽङ्न तीर्थं सफलं भवेत् ।
काले देशेऽपि वृध्यैव फलवृद्धि र्विधीयते ॥ 7
देशेकालेतु दीर्घेऽपि यदि कार्यान्तरेच्छया ।
क्रीडया वा भवेत्तीर्थं न मोहा द्बुमन्यते ॥ 8
प्रसङ्गानुप्रसङ्गेन गच्छेदन्येन वा भृतः ।
यस्तीर्थानि नरोमूढः तस्यापि न फलं भवेत् ॥ 9

भजमानोऽपि यत्तीर्थं न मोहा द्बहुमन्यते ।
नास्तिक्येन विवृद्धेन तस्यापि न फलं भवेत् ॥ 10

तस्मात् बुद्धिं समास्थाय त्यक्त्वा कार्यान्तरे स्पृहाम् ।
अभिगच्छे न्नरस्तीर्थं स्वतन्त्रः स्थिरमानसः ॥ 11

शक्तः स्वमन्नमश्नीया दशक्तो भैक्षमाचरेत् ।
नैमित्तिकानि यानि स्युस्तानि भुञ्जीत न क्वचित् ॥ 12

कायस्यानुपघातेन वृत्तिरस्य विधीयते ।
कृच्छ्रमेवं हि मर्त्यानां तीर्थाभिगमनं विदुः ॥ 13

नद्यः समुद्रगा स्तीर्थं सिन्धुनद्योश्च संगमः ।
वाप्यश्च मृदुभिर्जुष्टाः पर्वतायतनानि च ॥ 14

स्थानानि देवतानां च दुर्गाणि गहनानि च ।
आश्रमाणि च सिद्धानां चिह्नानि च दिवौकसाम् ॥ 15

भागीरथ्याश्च तीर्थानि सरस्वत्याश्च सर्वशः ।
आसमुद्रान् मनुष्याणां पावनानि विशेषतः ॥ 16

कुरुक्षेत्रेच तीर्थानि सालग्राम सरस्तथा ।
श्रीपर्वतेच तीर्थानि कुमारी तीर्थमेवच ॥ 17

सेतुबन्धश्च रामस्य तीर्थं गोकर्णमेवच ।
शूर्पारकं तथा तीर्थं पुष्करं नैमिशं तथा ॥ 18

स्थानं च वैष्णवं मुख्यं तीर्थानां परमं मतम् ।
एवमादीनि तीर्थानि नरः प्राप्य महामतिः ॥ 19

त्रिरात्रमेकरात्रं वा पूर्वं कुर्यादभोजनम् ।
अशक्तौ भैक्षमश्नीया त्कन्दमूलफलानि वा ॥ 20

जपयज्ञं सदा कुर्या न्मौनी ध्यानपरायणः ।
स्नात्वाऽचम्य शुचिर्भूत्वा तीर्थतोयेन मन्त्रवित ॥ 21

योगपीठं जले ध्यात्वा देवमावाह्य चेतसा ।
पाद्यमाचमनं चार्घ्यं दत्वा तेनैव वारिणा ॥ 22

तत्पादान्निःसृतां धारां ध्यात्वा मूर्धनि चात्मनः ।
अवगाहेत मौनेन तीर्थे भागवतो नरः ॥ 23

पञ्चोपनिषदा प्रोक्ष्य सहस्रं शतमेववा ।
कृत्वा स्नानविधिं सर्वं तर्पयित्वा च देवताः ॥ 24

दत्वा द्रव्यं यथाशक्ति गृह्णीया त्तीर्थे मुद्रिकाम्[1] ।
तयामृत्तिकया नित्यं देहमालिप्य शुध्यति ॥ 25

तीर्थतोयंच संहृत्य प्रोक्षये दात्मन स्तनुम् ।
एकरात्रं त्रिरात्रं वा वैष्णवः शुद्धिकाम्यया ॥ 26

इतिहासांश्च तीर्थेषु यत्नतः शृणुयाद्बुधः ।
पारंपर्येण ये तत्र वर्तन्ते भक्तिहेतवः ॥ 27

सिद्धानां चापि पूर्वेषां लक्षणान्युपलक्षयेत् ।
देवतानां मुनीनां च चरितान्यद्भुतानि च ॥ 28

आत्मनोऽन्तर्बहिस्तत्र चिन्तयेत्तीर्थ देवताः ।
स्वकर्मदृष्ट्या तिष्ठन्ति नान्यथा वैष्णवा बुधाः ॥ 29

येन कल्पेन तत्तीर्थं सेवनीय मुपागतैः ।
प्राहु स्तीर्थविधानंच त्रस्तं कल्पं न चिन्तयेत् ॥ 30

उत्तमान्वा समानान्वा कुर्यात्तीर्थे समं नरः ।
एकं द्वौ परम स्त्रीन्वा नाधिका न्नाथमांस्तथा ॥ 31

गच्छे त्प्रव्रजितैरेव कामक्रोध विवर्जितैः ।
तीर्थयात्रां नरो विद्वान् कुर्यात्तेषां च पूजनम् ॥ 32

---

१. ख. मृत्तिकाम् ।

ये नरा स्त्यक्त सर्वस्वा मुण्डाः काषाय वाससः।
विचरन्ति महीं कृत्स्नां ते मम प्रियसत्तमाः॥ 33

तस्मात्तेष्वेव शुश्रूषाः कुर्याद्भागवतः सदा।
तेषामपि कृता पूजा देवस्यैव कृता भवेत्॥ 34

भैक्षाचर्याशयादीनि दत्वा तेषां तु भक्तितः।
विद्वान् दत्तोपदेशश्च विष्णोः प्रियतमो भवेत्॥ 35

न किंचिदप्रियं कुर्यान्नराणां तीर्थवासिनाम्।
देवतानां च सर्वासां सत्वानां चापि सर्वशः॥ 36

येन कालेन यत्तीर्थं सेवितव्यं मनस्विभिः।
तेन कालेन तद्गच्छे दशक्तः पर्वणि व्रजेत्॥ 37

द्वादश्यां श्रवणायां वा संक्रान्तिषु रवेस्तथा।
तीर्थे मुख्यमुपासीत नान्येषां कालनिश्चयः॥ 38

अथवा विष्णुभक्तानां चरतां पृथिवीमिमाम्।
योगिनां तीर्थयात्रासु कालः सर्वो नवाज्यते[नियुज्यते?]॥39

यत्तीर्थं समनुप्राप्य चित्तमस्य प्रसीदति।
तत्र तिष्ठेन्नरो विद्वान् दीर्घकालं दृढव्रतः॥ 40

यत्र गत्वा मनो नाथ प्रसादमधिगच्छति।
तत्र वा[न चिरं?]युश्चरन् तिष्ठेत्तीर्थे मुख्येऽपि वैष्णवः॥ 41

आपत्स्वपि च कष्टासु नित्यं भागवतो नरः।
न तीर्थे प्रतिगृह्णीया दल्पम प्यल्पतो धनम्॥ 42

भिक्षामपि नयाचेत तीर्थस्थानेषु बुद्धिमान्।
बहिर्गत्वातु याचेत यावता देह धारणम्॥ 43

* ख. नायुश्चिरं

महाजनस्य सम्मर्दे दुर्जनस्यच संगमे ।
प्राणबाधासु चोग्रासु कथं चिद्वृत्तिरिष्यते ॥ 44

जपन्नेव सदागच्छे द्विद्वान् मन्त्रांस्तु वैष्णवान् ।
कथं च वैष्णवीं कृत्वा सखीनां प्रियकाम्यया ॥ 45

सभास्थानानि संप्राप्य समृद्धानि वराण्यपि ।
यावत्प्रयोजनं तिष्ठेत् न चिरं सिद्धिकामुकः ॥ 46

रममाणोऽपि तीर्थेषु क्रीडां परिहरेद्बुधः ।
आस्फोट क्ष्वेलहासश्च द्यूतमैथुनमेव च ॥ 47

एवमादीनि यः कुर्या त्तीर्थयात्रा मुपागतः ।
तस्य तीर्थफलं सर्वं हरन्ति ब्रह्मराक्षसाः ॥ 48

द्वावेव विपुलौ लाभौ नराणां तीर्थगामिनाम् ।
भक्तिप्रलय लाभं च योगज्ञानं च पुष्कलम् ॥ 49

यस्तु प्रदक्षिणं कुर्यान्मेदिनीं तीर्थयात्रया ।
संप्राप्नोति परां सिद्धिं नच पापेन बाध्यते ॥ 50

लभतेच महाज्ञानं जातिस्मरणमेवच ।
विघ्नानां मुपघातं च प्रसादं च सुरेश्वरात् ॥ 51

तस्मा त्सर्वप्रयत्नेन वैष्णवः सिद्धिकाम्यया ।
तीर्थयात्रां निषेवेत तदेव परमं हितम् ॥ 52

इति श्रीपाञ्चरात्रे परमसंहितायां
यात्रा नाम
पञ्चविंशोऽध्यायः ॥

श्रीः

# अथ षड्विंशोऽध्यायः ॥

——:o:——

ब्रह्मा

संसारस्य तु किं मूलं किमग्रं मध्य मस्य किम् ।
विस्तरेण तदाचक्ष्व तथ्येन पुरुषोत्तम ! ॥ 1

परमः

संसारस्य परं मूलं त्वमेव कमलोद्भव ! ।
ब्रह्मलोकं प्रतिष्ठाप्य ततोयः प्रथमे महान् ॥ 2
तस्य मध्य मिमे लोका नरकं चाग्रमिष्यते ।
ऊर्ध्वमूलमिमं वृक्षं मध्यशाखा मधःशिरः ॥ 3
संसारविधियन्त्रैते[यत्रैते] संसरन्ति शरीरिणः ।
तस्य लोकाः स्मृताः शाखाः सप्तभूमिमयाः पृथक् ॥ 4
पृथिवी चान्तरिक्षंच स्वर्महर्जनएव च ।
तपः सत्यंच सप्तैते लोकास्ते कथिताः क्रमात् ॥ 5
अधस्तात्पुनरेतेषां प्रोक्ता नरकभूमयः ।
तत्रपूर्वमिमां भूमिं वक्ष्ये तव पितामह ! ॥ 6
आयाम विस्तारोपेतां लक्षणै र्विविधैर्युताम् ।
सप्तद्वीपाः स्मृता भूमे र्वलयाकृतयः स्थिताः ॥ 7
द्विगुणं द्विगुणायामा नाना जन निकेतनाः ।
समानायाम विस्तारै र्वेष्टिता वरुणालयैः ॥ 8
वर्षाणां पर्वतानांच भेदाभेदेन लक्षिताः ।
जम्बूद्वीपः स्थितो मध्ये शाकद्वीप स्ततःपरम् ॥ 9

कुशक्रौञ्चौ ततो द्वीपौ शल्मली द्वीप एवच ।
गोमेदः पुष्करं चेति सप्त द्वीपा इमे क्रमात् ॥ 10

क्षारोदः सागरः पूर्वं परत्रेक्षुरसोदकः ।
सुरा दधि घृतोदाश्च क्षीरसागर एवच ॥ 11

स्वादूदकंच सप्तैते सागराः द्वीपवत् स्थिताः ।
एषु द्वीपेषु मध्यस्था नानाशृङ्गा महोच्छ्रयाः ॥ 12

आसमुद्रायता शैला विज्ञेया वर्षपर्वताः ।
तेषां मध्येतु वर्षाणि नाना जनपदास्तथा ॥ 13

नगरं ग्रामनद्यश्च शतशोऽथ सहस्रशः ।
जम्बूद्वीपस्य मध्येतु मेरुर्नाम महागिरिः ॥ 14

नानारत्नमयैः शृङ्गैः स्थितः काञ्चन विग्रहः ।
क्रीडा भूमिः सदेवाना मनेकाश्चर्य संयुतः ॥ 15

तस्य जम्बू नदीनाम मूलमावेष्ट्य तिष्ठति ।
तस्य दक्षिणपार्श्वेषु जम्बूवृक्षो व्यवस्थितः ॥ 16

अत्युच्छ्रूतः[1] सुविस्तीर्णः सर्वकाम फलप्रदः ।
मेरोः समन्ताद्विस्तीर्णं विद्धि वर्षं मिलावृतम् ॥ 17

तत्र जम्बू फलाहारा ज्ञेया स्तद्वर्ष वासिनः ।
मेरो रुत्तरतो ज्ञेया यत्रते वर्षपर्वताः ॥ 18

नीलः श्वेत स्त्रिशृङ्गश्च किंचिदूनाः परस्परम् ।
रम्यकं प्रथमं वर्षं हैरण्यं तदनन्तरम् ॥ 19

उत्तरा कुरवश्चेति त्रीणि वर्षाणि पद्मज ! ।
मेरो र्दक्षिणतोऽप्येवं वर्षशैलास्त्रयःस्थिताः ॥ 20

---

१. अतो क. ।

निषधो हेमकूटश्च हिमशैलश्च ते त्रयः ।
हरिवर्षं किं पुरुषं भारतं वर्ष मेवच ॥ 21
स्थितानि त्रीणि वर्षाणि किंचिदूना न्यनुक्रमात् ।
पूर्वस्यां दिशि मेरोस्तु पर्वतो गन्धमादनः ॥ 22
आनील निषधायाश्च पश्चिमायांतु माल्यवान् ।
भद्राश्वः केतुमालश्च वर्षे द्वे परतस्तयोः ॥ 23
योजन प्रयुतायामो द्वीपोऽयं मध्यमो भवेत् ।
अस्य वर्षेषु जीवन्ति नाना भू[रू]पास्तु मानवाः ॥ 24
आयुःसत्वबलादीनि तेषां भिन्नानि पद्मज ।
वर्षशैलेषु जीवन्ति यक्ष पन्नगराक्षसाः ॥ 25
भारतं दक्षिणं वर्षं नवधा खण्डितं स्थितम् ।
क्षारोदस्य समुद्रस्य तोयेना न्तःप्रसर्पिणा ॥ 26
तेषामेव च भेदेन शैलाः सरित एवच ।
न शक्याः परिसंख्यातुं ब्रह्मन् वर्षशतैरपि ॥ 27
क्षारार्णवस्य मध्यस्था बहवः पक्षिणो नगाः ।
क्षुद्र द्वीपाश्च भूयांस स्ते स्मृता म्लेच्छगोचराः ॥ 28
शाकद्वीपादिषु पुनः षट्सु द्वीपेषु पर्वताः ।
वर्षाणि सरितश्चैव शतशोऽथ सहस्रशः ॥ 29
तेषु जीवन्ति मनुजा धर्मशीलाः स्थिरायुषाः ।
पशवः पक्षिणश्चैव क्रव्यादाश्च सरीसृपाः ॥ 30
धार्मिका भूमिपालाश्च दयाशील समन्विताः ।
नोपघातो मिथस्तेषां कामक्रोधादिभिः क्वचित् ॥ 31
दानाध्ययनशीलाश्च [न पर?] स्वनिरताः प्रजाः ।
नापकारेषु वर्तन्ते परेषां व्यसनेषु वा । 32

वृक्षौषध्या बहु फला: सर्वं काम समृद्धय: ।
तत्र गाव: पयस्विन्य: प्रजा निर्व्यसनास्तथा ॥ 33

पुष्करद्वीपमध्येतु पर्वतो मानसोत्तर: ।
लोकपाला: स्थितास्तस्मिन् दिङ्मुखेष्विन्द्रपूर्वका: ॥ 34

सागरेषु तु जीवन्ति सत्वा: सलिलयोनय: ।
मकरा स्तिमयो नक्रा: कूर्मा नागाश्च दन्तिन: ॥ 35

सत्वेभ्य: स्थलचारिभ्यो भूयांसो जलचारिण: ।
समुद्रसलिलाहारा जीवन्ति निरवग्रहा: ॥ 36

स्वादूदात्परतो ब्रह्म लोकालोकस्तु पर्वत: ।
वेष्टयित्वा महीं कृत्स्नां परितस्सोपतिष्ठते ॥ 37

अर्वाचिनेतु तस्यार्धे चरन्ति रविरश्मय: ।
परार्धार्धकृतो नित्यं लोकालोक स्ततस्तु स: ॥ 38

इत्येषा कथिता भूमि: प्रथिता धातुपेशला ।
शुभाशुभानि कर्माणि यत्र कुर्वन्ति देहिन: ॥ 39

भुवनात्वन्तरिक्षाच्च वायवीयं प्रकुर्वितम् ।
उपर्युपरि तिष्ठन्ति मरुतस्तत्र सप्तधा ॥ 40

तत्रमेध्या गृहास्तारा नक्षत्राणि महर्षय: ।
तैजसेन शरीरेण तिष्ठन्ति निरुपप्लवा: ॥ 41

यक्ष विद्याधराश्चैव गन्धर्वा: किन्नरास्तथा ।
कामचारा निराबाधा स्तत्र जीवन्ति निर्वृता: ॥ 42

सप्तस्कन्धं तु तत्तत्र वायुचक्रं समोन्नतम् ।
भ्रमयत्युपरि स्थित्वा ध्रुवोनाम महामुनि: ॥ 43

तृतीयस्तेजसो लोक: स्वर्गलोक इति स्मृत: ।
वसन्ति विबुधा यत्र मोदमाना: सहस्रश: ॥ 44

विमानैः कामसंचारै रप्सरोभिः समन्विताः ।
तत्र देवगणा ब्रह्मन् निवसन्ति सहस्रशः ॥ 45
आदित्या वसवो रुद्रा साध्या ऋभव एवच ।
किंकराः कर्म देवाश्च पितरश्च पृथग्विधाः ॥ 46
चक्रमण्डल मध्यस्थं पिबन्तः परमामृतम् ।
जीवन्ति विविधास्तत्र वासवेनाभिरक्षिताः ॥ 47
तेजोमयेन वपुषा दीप्यमानाः समन्ततः ।
कल्पमात्रायुषो देवा जीवन्ति स्थिर यौवनाः ॥ 48
गावः कामदुधा स्तेषां कल्पवृक्षाश्च सर्वदा ।
चिन्ताफलानि रत्नानि पूरयन्ति मनोरथान् ॥ 49
एवमेते त्रयो लोका लभ्यन्ते कर्मभिः शुभैः ।
कर्मक्षयेन जीर्यन्ते ये मया कीर्तिता स्तव ॥ 50
चत्वारस्तु परे लोका ज्ञानसाध्याः पितामह ! ।
वसन्ति योगिनो यत्र योगाभ्यासेन निःसृताः ॥ 51
चतुर्थे महराख्ये तु दशकल्पायुषो नराः ।
सङ्कल्पसिद्धा स्तिष्ठन्ति विष्णुभक्ता जितेन्द्रियाः ॥ 52
पञ्चमेतु जने लोके शतकल्पायुषो नराः ।
ध्यानाहाराः प्रमोदन्ते वशो सन्निहितेन्द्रियाः ॥ 53
षष्ठे तपसि लोकेतु महाभूत जयैषिणः ।
सहस्रकल्पायुषः सिद्धा निवसन्ति समाह(हि)ताः ॥ 54
सप्तमे सत्यलोके तु प्रधाना वशिनो नराः ।
अयुतकल्पायुषः सिद्धा निवसन्ति निरुत्सुकाः ॥ 55
अत्रैव वसति ब्रह्मा लोकसृष्टि विचक्षणः ।
तेनायं ब्रह्मलोकश्च यत्र त्वमधितिष्ठसि ॥ 56

एते लोकास्तु गतयः शुभकर्म विपाकजाः ।
पापस्य तु गति र्नीचै र्लोकानामिति निश्चयाः ॥ 57
अधस्तात् क्षितिलोकस्य महानरकभूमयः ।
नानारूपाः पिशाचानां पट्कास्तिष्ठन्ति दुष्कृताः ॥ 58
रौरवः प्रथमस्तेषां महारौरवमेवच ।
नरकं कालसूत्रंच पञ्च कष्टमनन्तरम् ॥ 59
तामिस्र मन्धतामिस्र मित्येतानि पितामह ! ।
एतानि समनुप्राप्य तीव्र यात्रान्वितानि वै ॥ 60
दुष्कृतानां फलं घोरं भुञ्जते सर्वदेहिनः ।
अधस्तात्पुनरेतेषा मवीचिर्नाम विश्रुता ॥ 61
निवासो दानवेन्द्राणां नाशितानां गताहृता ।
एवमुद्देशतः प्रोक्ता सृष्टिरेषां पितामह ! ॥ 62
बहिरण्डकपात् वेधा रचयित्वैव तिष्ठति ।
अण्डस्यापि बहिर्योऽयं तस्य बुद्धि र्बहिःस्थिता ॥ 63
बुद्धेस्तु बहिरव्यक्त मव्यक्तात्पुरुषः परः ।
पञ्चशक्तिमयो विष्णु र्वासुदेवः सनातनः ॥ 64
नैव तस्मात्परं किंचिदास्तिकत्वं पितामह ! ।
सत्वनादि रनन्तश्च परिमाणविवर्जितः ॥ 65
तदिच्छया सृष्टिरयं विकास मधिगच्छति ।
तदिच्छया च संहारं कल्पान्ते प्रतिपद्यते ॥ 66
इति येयं तव प्रोक्ता लोकसृष्टिरशेषतः ।
एवमन्याश्च भूयश्च सृज्यन्ते तेन सृष्टयः ॥ 67
परस्पर परोक्षास्ताः प्रत्यक्षास्तस्य योगिनः ।
असंख्येया स्थितालोकाः सर्वे लोकोदयात्ययाः ॥ 68

नानाकारा विकाराश्च क्रीडार्थं तेन निर्मिताः ।
यथावृक्षस्य शाखासु फलानि सुबहून्यपि ॥ 69
संभवन्ति तथा तस्मिन् भुवनानीति धारय ।
निर्विकारः परोदेवो विकारान्सृजति प्रभुः ॥ 70
संसारस्य गतिं दृष्ट्वा क्रीडन्निव सतिष्ठति ।
इत्येषा सृष्टिराख्याता संसारस्य मया तव ॥ 71
अस्यांतु परिवर्तन्ते संसारे देहिनः पुनः ।
कदाचिदुत्तमा भूत्वा जायन्ते मध्यमा पुनः ॥ 72
भवन्ति चाधमाः पश्चात् कर्मपाशैः स्वयंकृतैः ।
सर्वास्तु गतयो ब्रह्मन् पुंसः संसारगोचराः ॥ 73
कर्मक्षयेन नश्यन्ति सो[नो?]त्तरा नच निर्व्यथा ।
तत्र देवकृताः सिद्धा मन्यमानाः स्वयंकृताः ॥ 74
आमूलनाशं भुञ्जानो न किंचित्प्रतिपद्यते ।
ततस्तु पुरतोदृष्ट्वा दुःखानि विषमाणिच ॥ 75
अवशो मन्यते देवं कर्तारं जगतः प्रभुम् ।
नावैष्णवस्य संसार द्विपदो विनिवर्तते ॥ 76
नावैष्णवस्य मर्त्यस्य संसारेऽपि स्थिरं सुखम् ।
इन्द्रियाणां वशं गत्वा संसारान्नातिवर्तते ॥ 77
तेषामपि विरोधेन संसारमतिवर्तते ।
तेषामपि विरोधोत्थं देवदेवं जनार्दनम् ॥ 78
सर्वकाल मुपासीत तेन सिद्धिर्भविष्यति ।
पशूनां मनुजानांतु देवानां योगिनां तथा ॥ 79
विष्णुभक्ता विशिष्यन्ते सर्वलोकेषु निश्चयः ।
मानवानां यथा देवा देवानांच यथा हरिः ॥ 80

योगिनांच यथा सिद्धाः सिद्धानांच यथा हरिः ।
लोकस्थितिमिमां दीर्घां विशालामतिदुस्तराम् ॥ 81
पश्यन्नास्ते परोदेवः परमव्योम्नि निर्वृतः ।
यथाहस्त स्थितानक्षान् पश्यन्ति पुरुषाः सुखम् ॥ 82
एवमेव परो देवः सप्तलोकान् स पश्यति ।
ब्राह्ममायुर्भवेत्तावद्यावत्तु जगतः स्थितिः ॥ 83
तस्यायुषि समाप्तेतु जगत्सर्वं प्रलीयते ।
स्वं स्वं कारणमृच्छन्ति सर्वाऽपि कृतयः सदा ॥ 84
अव्यक्ते ता निलीयन्ते तत्पुनः परमात्मनि ।
षड्भिरूनं सहस्रंतु युगानां ब्रह्मणो दिनम् ॥ 85
रात्रिश्च तावती तस्य संकल्प इति संज्ञितः ।
संवत्सरो नराणांतु देवानां नाधिका भवेत् ॥ 86
द्वादशैव सहस्राणि तेन मानेन वत्सरः ।
युगे युगे प्रवर्तन्ते कल्पामन्वन्तराणि च ॥ 87
यदातु तेन मानेन शतायुः सृष्टिकं भवेत् ।
तदा सृष्टिंतु संहृत्य स्वयमास्ते परः पुमान् ॥ 88

इति श्रीपाञ्चरात्रे परमसंहितायां
लोको नाम
षड्विंशोऽध्यायः ॥

श्रीः

# अथ सप्तविंशोऽध्यायः ॥

——:(०):——

ब्रह्मा

व्यामिश्रेण त्वयोक्तानां तत्रतत्रतु कर्मणाम् ।
संग्रहं मम देवेश वक्तुमर्हसि सर्वशः ॥ 1

परमः

हन्त ते कथयिष्यामि कर्मणां संग्रहं तव ।
नित्यनैमित्तिकानांच काम्यानां चापि सर्वशः ॥ 2
शयनादुत्थितः पूर्वं मुक्त्वा नारायणं पुनः ।
वाग्यतः प्राङ्मुखो भूत्वा कुर्याद्रक्षां तथात्मनः ॥ 3
मनसा सृष्टिमार्गेण सर्वमेव विचिन्त्यच ।
बद्धयोगपुटं ध्यात्वा शरीरान्तं यथाक्रमम् ॥ 4
पश्चा द्भूमि मवष्टभ्य बहिर्निष्क्रम्य पूर्ववत् ।
कृत्वोच्चारादिकं कर्म शुद्धिमार्गक्रमेण च ॥ 5
कृत्वाद्भिश्च मृदाचापि हस्तपादमुखान्यपि ।
शोधयित्वा यथान्यायं घ्राणाक्षिश्रवणानिच ॥ 6
संभक्ष्य दन्तकाष्ठं च कृत्वा निष्ठीवनानिच ।
आचम्य विधिवत्पश्चा त्पीत्वोन्मृज्य सकृन्मुखम् ॥ 7
भूयएव तथाचम्य प्रोक्ष्यात्मानं यथाविधि ।
आत्मानं परिषिच्या थ विसृजेत्सलिलाञ्जलिम् ॥ 8
सन्ध्या मुद्दिश्य भूयोऽपि पाणी प्रक्षाल्य वारिणा ।
पञ्चमन्त्रजपं कृत्वा देवस्यापि प्रदक्षिणम् ॥ 9

संभाष्य भूसुरैः पश्चान्मौने दीक्षां विसर्जयेत् ।
मङ्गलान्यात्मनो नित्यं दरिद्रोऽपि नहापयेत् ॥ 10
गन्धपुष्पाणि मन्त्रे द्वे शिखाबन्धं च पौष्टिकम् ।
आदर्शमञ्जनं रक्षां मुखवासंच संभवात् ॥ 11
आयुधाभरणादीनि तस्य तस्य यथोदितम् ।
एवमेतद्विधायादौ कार्यं लौकिकमाचरेत् ॥ 12
आसीत क्षितिमन्त्रेण वायुमन्त्रेण च व्रजेत् ।
व्योम मन्त्रेण भाषेत रूपं पश्येच्च तेजसा ॥ 13
जलंच जलमन्त्रेण सर्वकाल मुपस्पृशेत् ।
लौकिकेष्वपि कार्येषु सिद्धि मिच्छन्नरो बुधः ॥ 14
यागकाले तु संप्राप्ते द्रव्याणां संग्रहे कृते ।
मालां विसृज्य स्नात्वा च तर्पयित्वाच देवताः ॥ 15
यागस्थानं समासाद्य भूत्वा मन्त्रमयः स्वयम् ।
स्थानं रत्नमयं ध्यात्वा पात्राणि विविधानिच ॥ 16
प्रासादं चापि सौवर्णं तीर्थजान्युदकानिच ।
निर्माल्य स्थानमुद्दिश्य बहिरावरणाद्बहिः ॥ 17
पूरयित्वा जलैरेकं पात्रमन्यच्च पूरयेत् ।
पाद्या[पानीया?]चमनमेकेन स्नानमन्येन कारयेत् ॥ 18
अर्घ्यं पाद्यं तथैवान्य दर्घ्यैर्द्रव्यैश्च पूरयेत् ।
सर्वार्थं त्वपरं पात्रं महत्तोयेन पूरयेत् ॥ 19
गन्धादीनिच पात्रेषु स्थापयेत्स्तंभनेनवा [त्संभवे नव?] ।
वह्नेर्दक्षिणतः कृत्वा होमोपकरणानिच ॥ 20
पीठं कृत्वा पुनः सम्यक् विहारावरणानिच ।
सुगन्ध कुसुमं हस्ते संगृह्यावाहयेत्परम् ॥ 21

पीठ मासनमुद्दिश्य सह पुष्पेण निक्षिपेत्।
यागा द्यागावसानं त्वर्थसान्निध्यमर्थयेत्॥ 22
ततः पूजां यथायोगं कुर्या दात्मनिवेदनाम्।
स्वःस्थान एव देवेशं प्रत्यर्घ्य प्रलयक्रमात्॥ 23
स्थानं विशोध्य पात्राणि बलिं दत्वा बहिस्तथा।
विष्वक्सेनाय नैर्माल्यं पूजयित्वा निवेद्यच॥ 24
आचम्य वैष्णवैः सार्धं भुञ्जीतान्यैश्च शक्तितः।
अग्निर्भूत्वान्नमश्नीया त्सोमरूपमवस्थितम्॥ 25
आचम्य हस्त पादेषु शुष्केषु मनसा स्मरेत्।
इन्द्रियाणिच भूतानि स्पृशेद्वा मन्त्रपूर्वकम्॥ 26
स्पृशेदन्यानि भूतानि नाशुचिर्द्रव्यमेववा।
देवस्यैव कथाभिस्तं दिनशेषं समापयेत्॥ 27
धर्मकर्माविरुद्धानि कृत्वा कर्माणि वा बुधः।
सन्ध्याकालेतु संप्राप्ते सन्ध्योपासन माचरेत्॥ 28
स्तोत्राणिच जपेद्विद्वान् भुक्त्वाचम्य यथानिशि।
हृद्याकाशे प्रतिष्ठाप्य पूजयित्वा परं पुनः॥ 29
प्रलयक्रममास्थाय शयीत शयने सुखम्।
एवं भागवतानां हि गृहस्थानां विधिर्मतम्॥ 30
अन्येषामपि तुल्योऽयं संग्रहः संभवः स्मृतः।
नाग्निकार्यं तु शूद्रस्य नसन्ध्योपासनं तथा॥ 31
केवलं पुष्पयागस्य संग्रहः कथितस्तव।
अन्येषामपि वक्ष्यामि संग्रहं तव पद्मज!॥ 32
दीक्षाकामस्तु तन्त्रज्ञं साधुमन्यं दयान्वितम्।
अभिगम्यार्चयित्वाच श्रावयेत्कार्यमीप्सितम्॥ 33

आचार्योऽपि विदित्वा च शीलमाचारमेव च ।
समयं श्रावयेत्पूर्वं लिखित्वा चक्रमण्डलम् ॥ 34
एकान्ते विमले स्थाने तत्रावाह्य परं प्रभुम् ।
कृत्वा यागंच मनसा ततः शिष्यं च संहरेत् ॥ 35
पुनर्मन्त्रमयं कृत्वा सृष्टिमार्गेण मन्त्रवित् ।
मण्डलं दर्शयित्वाच श्रावयेत् भक्तिमग्रतः ॥ 36
आचार्यं समयं चापि धर्मं च विविधं पुनः ।
श्रावयेच्च पुनर्मन्त्रं गुरुः पूर्वं क्रमागतम् ॥ 37
श्राव[लेख?]यित्वा रजोभिस्तु ग्रन्थदीक्षां प्रयोजयेत् ।
उपदेशं ततो दद्या दर्चनाक्रममेवच ॥ 38
कारये त्पुष्पयागंच जपंच नियमांस्तथा ।
तत्र दीक्षां प्रयुञ्जीत मन्त्रहोमसमन्विताम् ॥ 39
भूयः शब्दैश्च कर्माणि होमेनापि समाचरेत् ।
दीक्षाधिवासने होमे पूर्वं संरक्षणः स्मृतः ॥ 40
द्वि[तृ?]तीया विस्तरेणैव विसर्गेच सकृत् सकृत् ।
एवं दीक्षां त्रिधा भिन्ना मुत्तरोत्तरभूयसीम् ॥ 41
प्रयुज्य लभते सिद्धिं वैष्णवः सुसमाहितः ।
स्थापनं कर्तुकामस्तु सार्वकालिकमुत्तमम् ॥ 42
प्रासादं कारयेदग्रे यथाविभव विस्तरम् ।
शिलाभिरिष्टकाभिर्वा काष्ठैर्वा लक्षणान्वितम् ॥ 43
स्थापनस्यतु नक्षत्र मासन्न मवधार्यच ।
सत्कृत्य शिल्पिनोऽर्थेन कृत्वा प्रसादमात्मनः ॥ 44
द्रव्याणां संग्रहं कुर्यात्स्थापनार्थाय सर्वशः ।
आदौ शिल्पि सकाशात्तु गृह्णीयात्प्रतिमां नवाम् ॥ 45

धनदानेन सत्कृत्य प्रीतिदानेनच स्वयम् ।
आचार्यं वरयेच्चैव सुवृत्तं तन्त्रपारगम् ॥ 46

कुशलं भक्तिमन्तंच पालयित्वा धनादिभिः ।
अन्यानिच नवानि स्यु द्रव्याणि विविधानिच ॥ 47

तानि सर्वाणि संहृत्य शोधयित्वा च मेदिनीम् ।
नयनोन्मीलनं कुर्या त्प्रतिमाया विधानतः ॥ 48

जलेषु शाययेत्पश्चा द्रक्षयेच्च समंततः ।
अथाधिवासनं कुर्या द्यथाव द्विधिपूर्वकम् ॥ 49

स्थापयेच्च ततो विद्वान्नक्षत्रे शोभने हरिम् ।
स्थापयित्वा तु सर्वेषामर्थिनामविशेषतः ॥ 50

वस्त्राणि भोजनंचैव दद्यादहरहः क्रमात् ।
वैष्णवानांच सर्वेषां पण्डितानां च सर्वतः ॥ 51

भृत्यानां शिल्पिनां चैव पूजां कुर्याद्यथाक्रमम् ।
योजकानां च कर्तुश्च याजकानां च सर्वशः ॥ 52

अन्यथाहि महान् दोषः स्थापकस्य भविष्यति ।
चतुर्थे दिवसे प्राप्ते कृत्वा स्नपनमुत्तमम् ॥ 53

तीर्थयात्रां ततः कुर्या द्देवस्योत्सव संयुताम् ।
समाप्य-प्रतिष्ठाप्य कारयेन्नित्यमर्चनम् ॥ 54

त्रिकालमेककालंवा बलिं कुर्याद्दिनेदिने ।
अवसानमिदं विद्धि स्थापनस्य पितामह ! ॥ 55

एवंतु स्थापनं कृत्वा कृतकृत्यो भविष्यति ॥ 56

इति श्रीपाञ्चरात्रे परमसंहितायां
संग्रहं नाम
सप्तविंशोऽध्यायः

---

श्रीः

# अथाष्टविंशोऽध्यायः

—:○:—

ब्रह्मा

आपत्काले तु संप्राप्ते नित्ययागस्य यो विधिः ।
नैमित्तिकस्य काम्यस्य सर्वमेतद्ब्रवीहि मे ॥ 1

परमः

शक्तिभिर्मुक्तिपालैश्च संयुतः पीठमन्त्रकैः ।
विज्ञेयः कृतयागोऽयं नित्ययागः स उत्तमः ॥ 2
पीठेनैव समस्तेन बहिरावरणैर्विना ।
मन्त्रपूर्वं कृतोयागो नित्ययागः स मध्यमः ॥ 3
केवलेनैव पद्मेन महा भूतमयो नयः ।
कार्येण हविषा चैव भूषणैश्च समन्वितम् ॥ 4
द्रव्यशुद्धिसमायुक्त मुत्तमं पूजनं भवेत् ।
अग्निकार्यं विना यत्तु कालपक्वं निवेद्यच ॥ 5
उपचारैर्युतं सर्वैर्मध्यमं पूजनं भवेत् ।
वस्त्रालंकारशोभादि वर्जयित्वा पृथग्विधम् ॥ 6
केवलं पुष्पयागस्तु कनिष्ठं पूजनं स्मृतम् ।
धारणादिसमायुक्तः प्रलयोदयसंयुतः ॥ 7
सर्वमन्त्रकृतो ज्ञेयो देहन्यासः स उत्तमः ।
प्रलयोदयमात्रेण मध्यमः परिकीर्तितः ॥ 8
............षडङ्गन्यासेन कनिष्ठो न्यास उच्यते ।
पूर्वं पूर्वं प्रधानं स्या त्सर्वेष्वेव यथाक्रमम् ॥ 9

शक्ति भक्ति समायोगा त्प्रयोगस्त्वपरिस्मृतः ।
पुण्यदेशेच काले च यागो नैमित्तिकः स्मृतः ॥ 10
सपुनस्त्रिविधो ज्ञेय उत्तमाधममध्यमाः ।
कृतोपवास स्तेषु स्यात् व्रतचारीच यत्नतः ॥ 11
मध्यमस्तु पयोभक्षः फलमूलाशनोऽपरः ।
अन्नपानादिसंयुक्तं मुख्यनैमित्तिकं भवेत् ॥ 12
यागसाकल्यमात्रेण मध्यमं परिकीर्तितम् ।
व्रतोपवासरहितं कनिष्ठं परिकीर्तितम् ॥ 13
अन्येन याजन..........व्याप्तौ वा सङ्कटेऽपिवा ।
याजकस्य गुणं दृष्ट्वा याजनं मध्यमं भवेत् ॥ 14
ऐश्वर्यादात्मनो....यं कनिष्ठं याजनं क्रमात् ।
उपवासंच यागश्च भोजनं दानमेवच ॥ 15
एतस्मिन्नेव दिवसे मोक्षकामस्य शस्यते ।
कृत्वोपवासं पूर्वेद्युरर्चये.................................. ॥ 16
..........च भोजयेचापि फलकामः पितामह ! ।
..............................महान्तं यत्न माचरेत् ॥ 17
कालेन महता.................................... ।
परिमाणमवेक्ष्यैव कर्मणा.................................. ॥ 18
..............................णः क्रमाद्योगः काम्यया ।
गतिर्यत्तस्य कृशत्वमधमस्त..................सः ॥ 19
..............................यागस्य कैवल्यमीप्सितम् ।
..............................दन्यैस्तत्र विद्भिर्यथाक्रमम् ॥ 20
..........धनेन....दद्यात् सकारेण प्रियेणच ।
अर्थ धातु [अर्थं दातु?] मशक्तोऽपि कारयेद्देवपूजनम् ॥21

शुश्रूषा प्रियवाक्यैश्च तत्सर्वं परिपूरयेत् ।
पूजामार्गमजानंस्तु पूजकात् पूजये.................... ॥ 22
..........पाभिः प्रयुक्ताभिः पूजाद्रव्यं प्रजायच ।
देवा.................स्थानाय धनशोधनैः ॥ 23
गन्धपुष्पादि.........नैः कान्तिकर्मभिः ।
उत्सवा..................शान्तिकर्मभिरेवच ॥ 24
देवे यागः..................................परः स्मृतः ।
असामान्यत.....................................नवः ॥ 25
वैष्णवः श्रुणुयात्तत्र तस्यापि वि.................... ।
..............वञ्चयित्वाच चोरयित्वाचपुष्कलः ॥ 26
तत्र पा...........................विष्णु धर्मबहिष्कृतः ।
तस्मादीप्सित सिध्यर्थं तस्मिन्कालेऽपि साधकः ॥ 27
आचार्यमधिगम्यैव तन्त्र मादातु मर्ह.............. ।
उत्तमः परिचर्याभि रर्थदानैस्तु मध्यमः ॥ 28
आचार्यं तोषयेत्..................ष्ट प्रियकर्मभिः ।
आपत्काले विनाचार्यः...................................... ॥ 29
प्रद्यात्परमं तन्त्रं विद्या................................ ।
भक्तिमान् धर्मशीलश्च परोपद्रवनिस्पृहः ॥ 30
ज्ञानार्थं सिद्धिकामश्च शिष्याः पात्र..................... ।
पात्रे विद्यांतु निक्षिप्य केवलं धर्मकारणात् ॥ 31
प्राप्नोति महतीं सिद्धिमाचार्यो नान्यथा क्वचित् ।
सिद्धिकामः परः शिष्यः श्रीकामो मध्यमः स्मृतः ॥ 32
क्षुद्रकामो जघन्यस्तु यत्र शिष्याः प्रकीर्तिताः ।
आपद्यपितु कष्टायां भी..........दुर्गतोऽपि वा ॥ 33

पूजयेन्नैव वृ[त्यर्थं?] देवदेवं कदाचन ।
पर्वताग्रं परं स्थानं नदीतीरं तु मध्यमम् ॥ 34
अधमं ग्राममध्यस्थं स्थानमेवं त्रिलक्षणम् ।
संगृह्य गुरुविद्यांश्च मनु.... त्रिषु दृढव्रतः ॥ 35
अन्तरायै रधृष्यश्च साधको........ उच्यते ।
अनुतिष्ठन् परिक्लेशं मध्यमः साधकस्तु सः ॥ 36
एवमेवतु विज्ञेया सर्वेषां त्रिविधा गतिः ।
शक्तानामुत्तमास्तस्य 37
रा पक्ष............परा वुभौ ।
कनिष्ठं सर्वदा पक्षं न समर्थः समाचरेत् ॥ 38
भक्ति रहमप्यत्र भक्तैर्भवति लाघवम् ।
आपत्काले सकृत्कृत्वा प्रमादे संकटेऽपिवा ॥ 39
द्वितीयं न पुनः कुर्या देषशास्त्रस्य निर्णयः ।
यत्कृतं गुरुवाक्येन यत्कृतं व्याधिपीडया ॥ 40
नतद्दोषकरं ज्ञेयं पुनश्चेच्छुभमाचरेत् ।
एतदुद्देशमात्रेण विधानं प्रोक्तमापदि ॥ 41
आपदां बहुलत्वात्तु विस्तारो नान्तमृच्छति ।
दुर्भिक्षं राजबाधा च व्याधि रग्निभयं तथा ॥ 42
दस्युपीडापहारश्च विज्ञेयाः परमापदः ।
एतासामापदां योगे समयं लङ्घयन्नपि ॥ 43
न दुष्यति पुनः कृत्वा किंचिदेव शुभान्वितम् ॥ 44

इति श्रीपाञ्चरात्रे परमसंहितायां
अनुग्रहं नाम
अष्टविंशोऽध्यायः ॥

श्रीः

# अथैकोनत्रिंशोऽध्यायः

---

ब्रह्मा

कर्मशेषा स्त्वयानोक्ता स्तन्त्रेऽस्मिन् सन्ति[यदि]केचन ।
तदिदानीं समाचक्ष्व परं कौतूहलं हि मे ॥ 1

परमः

अथातःसंप्रवक्ष्यामि कर्मशेषानशेषतः ।
सतेषां कर्मणामेव यथायोगं पितामह ! ॥ 2

योगपीठं विना कुर्या न्मुद्रया पद्ममासनम् ।
शक्तिश्च पद्ममालांश्च[1] केसरेषु दलेषुच ॥ 3

कल्पयित्वा पुनः कुर्यात् दिक्पाला न्बहिराश्रयान् ।
बीजस्थाने तु ये बीजे देवतानामनाम्निच ॥ 4

मूलमन्त्रे तु विन्यस्य तेन यागं समाचरेत् ।
आमनः [त्मनः] कार्यमुक्ता तु मूलमन्त्रः समाप्यते ॥ 5

प्रधान देवतामेव हृदयादिषु कल्पयेत् ।
षडङ्ग न्यास सिध्यर्थं काम्ययागे ष्वयं विधिः ॥ 6

पूजारंभे भयस्थाने कान्तारेषु नदीषुच ।
प्राणान्तिकेषु दुर्गेषु षडङ्गन्यास माचरेत् ॥ 7

अर्चने भोजने स्तुत्ये स्नाने चाचमने हुते ।
मूत्रोच्चारविसर्गे च सन्ध्यायांच प्रपूजने ॥ 8

शरीरन्यासकाले च नमस्कारे च तर्पणे ।
मौनं कुर्या त्प्रयत्नेन भवेन्निष्फल मन्यथा ॥ 9

---

१. माल्यांसांश्च ख. ।

सौवर्णो राजतस्ताम्रः खादिरोवा स्रुवो भवेत् ।
आद्यमैश्वर्यसिध्यर्थं राजतं कीर्तिवर्धनम् ॥ 10

ताम्रं शान्तिकरं प्रोक्तं खादिरं वसुवर्धनम् ।
द्वादशाङ्गुलमायामं कूल[1][मूल?]विष्कंभ मङ्गुलम् ॥ 11

विष्कंभात् द्विगुणं वृत्तं विष्कंभस्य दलं गुणे ।
यवमाना वुभौ गर्तौ गर्तवृत्तौ पृथक् पृथक् ॥ 12

विष्कंभात् पादहीनं स्यात् गर्भसीमाय वा दलम् ।
गोपुच्छसदृशं दण्डं नासिकापुटमत्पुटम् ॥ 13

स्रुवस्य कारयेद्विद्वान् स्रुवश्च सममायतम् ।
विष्कंभात् द्विगुणं वृत्तं विष्कंभात् द्विगुणं गलम् ॥ 14

भागान् कुर्यात्पुनः पञ्च द्विभागस्त्वाननं भवेत् ।
दण्डमानं भवेच्छेषं गर्तं वित्तं महादलम् ॥ 15

उभोष्ठसदृशं त्वग्रौ मन्त्रमष्टाक्षरं जपेत् ।
उक्त्वा परमहंसंच शुद्धभूमौ हि दापयेत् ॥ 16

[2]दद्याच्छेषं विधानेन तेन नश्यति किल्बिषम् ।
उपस्थाय रसेनान्नमभिमृश्य तथांभसा ॥ 17

वायुमन्त्रैश्च भुञ्जीत पञ्च प्राणाहुतीर्बुधः ।
प्राणोऽपान स्तथा व्यान उदानश्च समानवान् ॥ 18

वायुबीजेन विज्ञेयाः पञ्चमन्त्राः स्वनामभिः ।
भुक्त्वा तोयं पिबेत्तेन हस्तशुद्धिंच कारयेत् ॥ 19

अर्चयित्वा परं देवं नित्यमव्यग्रया धिया ।
स्तुतिकाले तु संप्राप्ते स्तोत्र मेत दुदाहरेत ॥ 20

---

१. ख. मूल । २. अ. ख.

जितं ते पुण्डरीकाक्ष! नमस्ते विश्वभावन!।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज!॥ 21
देवानां दानवानांच सामान्यमधिदैवतम्।
सर्वदाचरणद्वन्द्वं व्रजामि शरणं तव॥ 22
एकस्त्वमसि लोकस्य स्रष्टा संहारक स्तथा।
अध्यक्षश्चानुमन्ता च गुणमायासमावृतः॥ 23
संसार सागरं घोर मनन्तक्लेशभाजनम्।
त्वामेव शरणं प्राप्य निस्तरन्ति मनस्विनः॥ 24
न ते रूपं नचाकारो नायुधानि नचास्पदम्।
तथाऽपि पुरुषाकारो भक्तानां च प्रकाशसे॥ 25
नैव किंचित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित्।
नैव किंचिदसिध्यन्ते नच सिद्धोऽसि कस्यचित्॥ 26
कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्।
योगानां परमा सिद्धिः परमं ते परं विदुः॥ 27
अहं भीतोऽस्मि देवेश संसारेऽस्मिन् महाभये।
पाहि मां पुण्डरीकाक्ष! नजाने शरणं परम्॥ 28
कालेष्वपिच सर्वेषु दिक्षु सर्वासु चाच्युत!।
शरीरेच गतौ चापि वर्धते मे महद्भयम्॥ 29
त्वत्पाद कमलादन्यन्न मे जन्मान्तरेष्वपि।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम्॥ 30
विज्ञानं यदिदं प्राप्तं यदिदं स्थानमार्जितम्।
जन्मान्तरेऽपि मे देव मा भूदस्य परीक्षयः॥ 31
दुर्गतायां वापि जातायां त्वद्गतो मे मनोरथः।
यदि नाशं नविन्देत तावतास्मिन् कृतीसदा॥ 32

न कामकलुषं चित्तं मम ते पादयोः स्थितम् ।
कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥ 33

इत्येवमनया स्तुत्या स्तुत्वा देवं दिने दिने ।
किंकरोमीति चात्मानं देवायैव निवेदयेत् ॥ 34

पूजाद्रव्यविशेषेण पूजयेदात्मन स्तनुम् ।
पूजापीठ निकृष्टे तु स्वयमासीत विष्टरे ॥ 35

यथाराजानमुत्कृष्टं यथावा परमं गुरुम् ।
आराधयति यत्नेन तथा देवं समर्चयेत् ॥ 36

अग्निकार्येतु होमस्य त्रीणि द्रव्याणि पद्मज ! ।
समिधोहविराज्यं च तैर्नित्यं होममाचरेत् ॥ 37

पुष्पाणि लोकपालानां दिशासु विदिशासु च ।
विन्यस्य गन्धयुक्तानि सर्वदा होममाचरेत् ॥ 38

काम्ये नैमित्तिके चापि पक्वहोमो विधीयते ।
इध्महोमंच नान्यत्र नस्रुवो होममेव च ॥ 39

एकैक समिधं कृत्वा सर्वं मन्त्रैर्यथाक्रमम् ।
स्रुवेण जुहुयादाज्यं हस्तेन जुहुयाद्धविः ॥ 40

संगृह्य समिधां भस्म होमान्ते जलमिश्रितम् ।
आलिम्पेदात्मरक्षार्थं पापनाशार्थमेवच ॥ 41

शिखा ललाटकण्ठेषु हृदये भुजयोस्तथा ।
नाभौ च चरणाग्रे च नशोभार्थं कदाचन ॥ 42

वह्निमन्त्रेण कुर्वीत भस्मना लेपनं बुधः ।
गदारूपानुरूपास्यादेका सर्वत्र नाधिका ॥ 43

आचार्यं नतु कुर्वीत निकृष्टं जन्मना नरः ।
उत्कृष्टमपिदुर्वृत्तं सिद्धिकामस्तु वैष्णवम् ॥ 44

बहूनामेकदा दीक्षा माचार्यो यदि कारयेत् ।
एकएव प्रयोगस्य सर्वसाधारणो भवेत् ॥ 45
शिष्य संस्कार युक्तंच उभे नैव समाचरेत् ।
स्थापने मूर्तिपालानां द्वादशानां क्रमेणतु ॥ 46
मूर्तिपा न जुहुयुः पक्व माचार्यस्तु हुनेत्स्वयम् ।
मूर्तीनां द्वादशानां तु शक्तीनां चापिसर्पिषा ॥ 47
वासुदेवादिकानां च होमं कुर्याद्यथाक्रमम् ।
अद्भिः कृत्वा समां भूमिं [शंकुं] शंकुर्यात्प्रयत्नतः ॥ 48
सर्वत्र समविष्कंभं द्वादशाङ्गुल मायतम् ।
लिखित्वा मण्डलं भूमौ कर्कटेन समंततः ॥ 49
मध्ये शङ्कुं प्रतिष्ठाप्य सर्वतः सममञ्जसा ।
प्रतिष्ठामण्डले छाया मन्ते कृत्वा तु चिह्निताम् ॥ 50
अपराह्णे तु निष्क्रान्ता मन्तएवतु चिह्नयेत् ।
सूत्रपातं तयोः कृत्वा विद्यात्पूर्वापरे दिशौ ॥ 51
कर्कटेन तयोर्मध्ये मत्स्यमुत्पादयेत्पुनः ।
तस्यां तयोस्तु सूत्रेण जानीयाद्दक्षिणोत्तरे ॥ 52
एवं कुर्वीत दिङ्मानं देवागारस्य सर्वदा ।
मण्डलस्यापि लेखायां सूक्ष्ममानमिदं मतम् ॥ 53
अन्यथा स्थूलमानेन दिशां विद्याद्विचक्षणः ।
चित्रास्थानान्तरालेन मध्यमेन ग्रहेण वा ॥ 54
पुष्पयागंतु कुर्वीत ब्रह्मचारी समाहितः ।
संभवे कालपक्वानि फलान्यपि निवेदयेत् ॥ 55
पक्वैरपि वनाहारैर्वानप्रस्थो निवेदयेत् ।
गच्छे त्वाकृतसन्यासो ग्रामादेवार्चनायच ॥ 56

जपयज्ञं सदाकुर्वन् ध्यानयाग मथाचरेत् ।
योगाङ्गान्यनुनिष्ठेच्च तीर्थानिच समाश्रयेत् ॥ 57

तीर्थस्थानेषु मुख्येषु विष्णोरायतनेषु च ।
चातुर्मास्य मुपासीत लिखित्वा चक्रमण्डलम् ॥ 58

तीर्थयात्रांच कुर्वीत तेषु देवं च पूजयेत् ।
तन्त्राणि सरहस्यानि श्रुणुयाद्गुरुसन्निधौ ॥ 59

प्रत्यासन्नेतु मरणे यत्नवान् गुह्यमास्पदम् ।
परिक्लिश्यापि सेवेत नित्यं प्रव्रजितो नरः ॥ 60

प्रदक्षिण क्रियायांतु देवागारस्य वैष्णवः ।
निर्माल्य धारिणं देवं चान्तरेण नलंघयेत् ॥ 61

तावद्गत्वा निवर्तेत प्रसह्य पुनरागतः ।
प्रासादद्वारमासाद्य दत्वापुष्पाञ्जलिं पुनः ॥ 62

नमेति किंचिदावर्तो मूर्ध्नाचाञ्जलिना तथा ।
तद्भक्तस्यैव नमस्कुर्या त्परिवारांश्च सर्वशः ॥ 63

दीक्षितस्याय माचारः काममन्यस्य योगिनः ।
योगैश्वर्यादि विन्यासं योगपीठस्य बाह्यतः ॥ 64

मूर्तिविन्यासवत्कुर्या त्सर्वयागेष्वनुक्रमात् ।
विष्यां वींश्चबहु [दिक्पालांश्च बहि]स्तेषां दिक्षु सर्वासु
कल्पयेत् ॥ 65

दीक्षायांच बहिस्तेषां स्वादि[सु?] दिक्षु निवेशयेत् ।
तेषां तु पूजनं प्रोक्तं गन्धपुष्पादिना पृथक् ॥ 66

महायागः स्मृतोह्येषः सर्वकामसमृद्धिदः ।
सर्वदा न च कर्तव्यो यागेषु न्यासविस्तरः ॥ 67

निमित्तेषु विशेषेण संभवेच्च प्रयोजयेत् ।
कामार्थेषुतु यागेषु विस्तारः सर्वइष्यते ॥ 68

सर्वेष्वप्यङ्गहीनोऽयं विधिरिष्टं न साधयेत् ।
आवाह्य पूजयेद्देव मर्घ्यदानेन भक्तितः ॥ 69
अलंकारावसाने च पूजनान्तेच नित्यशः ।
आपः क्षीरं कुशाग्राणि सर्पी मर्दतिलाः फलम् ॥ 70
गन्धपुष्पादि दूर्वाच सर्वपापक्षयं तथा ।
पञ्चावरणामेतेषां संग्रहादर्घ्यमिष्यते ॥ 71
पात्रात्पात्रे गृहीत्वार्घ्यं हस्ताभ्यां प्रतिपादयेत् ।
अष्टाक्षरं जपेन्नित्यं द्वादशाक्षरमेव च ॥ 72
अदीक्षितोऽपि सततं विष्णुभक्तो दृढव्रतः ।
जपेत्परमहंसंतं नकदा चिद्दीक्षितः ॥ 73
प्रणवेन विनामूर्खा जपेयुरितरावपि ।
स्त्रीबालबधिरादीनां पूजयेदेवनिर्वृतः ॥ 74
भगवन्तं सदा विद्वान् नतन्त्रो परमः शुभः ।
गम्भीरपरमो देवो नाचिरेण प्रसीदति ॥ 75
ननश्यति कृतं कर्म तस्मात्तिष्ठे दनाकुलः ।
महाजनसमक्षंच देवदेवं न पूजयेत् ॥ 76
न कृतां कीर्तयेत्पजां नोच्चै स्तोत्रमुदाहरेत् ।
कर्मशेषमशेषेण न शक्यं वदितुं मया ॥ 77
बाहुल्येनतु निर्देशः कृतोऽयं कमलासन ! ।
विष्णुभक्ता महात्मानः पञ्चरात्रपरायणाः ॥ 78
यद्ब्रूयुः संशयस्थाने तत्कार्यमविशङ्कया ॥ 79

इति श्रीपाञ्चरात्रे परमसंहितायां
कर्मशे[षो?] नाम एकोनत्रिंशोऽध्यायः ॥

---

श्रीः

# अथ त्रिंशोऽध्यायः

——:(०):——

ब्रह्मा

भगवन् पुण्डरीकाक्ष वैकुण्ठ पुरुषोत्तम ।
ज्ञानमेतदशेषेण त्वत्प्रसादान्मया श्रुतम् ॥ 1

नष्टा मे संशयाः सर्वे पूर्वं जाताः समंततः ।
कृतकृत्यमिवात्मान मद्य मन्ये जगत्प्रभो ! ॥ 2

रहस्यमपि यद्यत्र ज्ञानं गुह्यं भवेत्कचित् ।
तदप्यखिल माचक्ष्व तत्रमे परमा स्पृहा ॥ 3

परमः

हन्त ते कथयिष्यामि ज्ञानं गुह्यं पितामह ।
यदन्यैर्न श्रुतं पूर्वं हितानां परमं हितम् ॥ 4

तन्त्रोक्तेन विधानेन नित्यमव्यग्रमानसः ।
असमीक्ष्य फलं किंचि न्मामुपासीत मानवः ॥ 5

पूजयित्वा तथा पूजा मध्येवा प्रतिपूजयेत् ।
किंकरत्वेन चात्मानं कृत्वाञ्जलि रधोमुखः ॥ 6

अन्नपानं धनं पुत्रं आयुरैश्वर्य मास्पदम् ।
आपद्यपि नयाचेत पूजकः पुरुषोत्तमम् ॥ 7

नाप्रसन्नो ददाम्येष याचितोऽपि दिने दिने ।
अयाचितोऽपि तत्सर्वं सुप्रसन्नो ददाम्यहम् ॥ 8

नकालः कारणं तत्र नार्चनस्य च गौरवम् ।
न पूजकस्य दुःखंवा मत्प्रसादस्य पद्मज ! ॥ 9

स्वयमेवतु जानामि पूजकस्य गुणागुणान् ।
पूजायाः संपदश्चापि कालस्य गमनं तथा ॥ 10

स्वयमेव प्रसीदामि संपदं प्रेक्ष्य सर्वदा ।
प्रसन्नस्त्वनुगृह्णामि त्वरया न कदाचन ॥ 11
इह जन्मनि नस्याचे दन्यजन्मनि तद्ध्रुवम् ।
अन्य जन्मनि नस्याचे त्परजन्मनि तद्ध्रुवम् ॥ 12
नत्वेन मनुगृह्णामि जन्मान्तरशतेऽप्यहम् ।
सकृदप्यर्चयित्वा मां परिवृत्तमुपासनात् ॥ 13
कर्मणां पच्यमानत्वा दपरेषां परीक्षये ।
प्रकाशयामि भक्तानामहं किं मदनुग्रहम् ॥ 14
ततस्तु संपदेनैषः पुरुषानुपतिष्ठते ।
मित्राणिच विवर्धन्ते क्षीयन्ते शत्रव स्तथा ॥ 15
फलानि यत्ना भूयिष्ठं नश्यन्ति व्याधयः स्वयम् ।
अन्नपानेष्वसंक्लेशो वर्धन्ते पशवस्तथा ॥ 16
दीर्घकालं भवत्यायु र्जायन्ते सुभगाः प्रजाः ।
प्रशंसन्ति जनाः सर्वे चोरयन्ति न तस्कराः ॥ 17
निरुपद्रवमैश्वर्यं तिष्ठति प्रथतेऽपिवा ।
अपरान्तसुखेनैव पुण्यकाले भविष्यति ॥ 18
ततोहि लभते जन्म वंशे श्रेष्ठे महात्मनाम् ।
तत्रापि मा मुपासीनः संपद्भिरभिवर्धते ॥ 19
ततोऽभि[पि]लभते जन्म तस्मादपि गुणाधिकम् ।
इत्येवं पुष्टिरेवस्या त्तस्य जन्मनि जन्मनि ॥ 20
ततोऽष्टगुणमैश्वर्य मक्लिष्टमधिगच्छति ।
तत्र तिष्ठति वा दीर्घं विहरन्मत्परायणः ॥ 21
अथवा ज्ञानमास्थाय निर्वाण मधिगच्छति ।
मद्भक्तेऽपि प्रसादो मे न कदाचिन्नहीयते ॥ 22

भजते यदि मामेव शरणं पुरुषः स्वयम् ।
यदि मां विस्मरत्येष दृपितः सुखनिद्रया ॥ 23

ततोऽस्य विपदः किंचि दुत्पद्यन्ते समंततः ।
ततोऽयं विपरीतेन स्रोतसा युज्यते पुमान् ॥ 24

ततोऽस्य विविधाः कामाः संभवन्ति मनोरथे ।
ततस्तेषां प्रसङ्गेन कुरुते शुष्कपौरुषम् ॥ 25

तत्र प्रतिहतः किंचि त्पुनरन्यद्विचेष्टते ।
एवं कार्यानुबन्धेन संसारे क्लेशमृच्छति ॥ 26

मद्गता भक्तिरेवास्य संपदां कारणं परम् ।
व्यापत्तस्यां तु नष्टायां स्वयमेवोपतिष्ठते ॥ 27

तस्माज्जातैव पुंसस्तु मद्गता भक्तिरन्वहम् ।
वर्धनीया विशेषेण सैनं नयति त[स?]त्पथम् ॥ 28

न कस्य[च]विनायत्नै रचैनैः स्वयमप्सु नौः ।
प्रवर्तते प्रतिस्रोतो नयत्येन सुपर्यपि ॥ 29

एवं मद्भक्तियोगेन संप दस्य विवर्धते ।
हित्वा संसारजान् क्लेशान् कुरुते चैन मुत्तमम् ॥ 30

नाविकस्यापराधेन यथा नौ र्विनिवर्तते ।
एवं मद्भक्त्यपायेन संसारोऽस्य विवर्धते ॥ 31

तस्मादविकला भक्ति र्मद्गता देहिनां गतिः ।
तस्या एव विभूत्यर्थं सर्वमन्यत्पितामह ! ॥ 32

यः पूजयति मां नित्यं यद्वुदाहरति स्तवम् ।
यो ध्यायति च मामेव तेन भक्तिर्विवर्धते ॥ 33

भक्तावविद्यमानायां प्रयत्नः सुमहानपि ।
लोकाडम्बर मेव स्याद् फलं प्रेत्य चेहच ॥ 34

तस्मात्सर्वं प्रयत्नेन भक्तिमेव विवर्धयेत् ।
सा तु वृद्धा नयत्येव वैष्णवं परमं पदम् ॥ 35
तत्त्वदर्शनमेवास्याः कथितं वृद्धिकारणम् ।
सर्वदा पश्य मां तत्त्वं मयि भक्तिर्विवर्धते ॥ 36
अहमेकः प्रसूतोऽस्मि संप्राप्य वपुरीदृशम् ।
अस्मिन् काले यथा चास्मि रूपेणानेन संयुतः ॥ 37
पूर्वं मप्यभवज्जन्म विषये मम कुत्रचित् ।
उत्तमं वाऽधमं वा यत्समं वा गुणसंपदाम् ॥ 38
जन्मान्तरंच मे भावि किमप्यस्ति शुभाशुभम् ।
तस्मादप्यपरं जन्म ध्रुवमेव भविष्यति ॥ 39
नच मां जायमानं वा कुतश्चिन्मातुराश्रयात् ।
एकाकी म्रियमाणं वा कश्चिदप्यनुधावति ॥ 40
मम दुःखेन नान्यस्य दुःखं किमपि जायते ।
मत्सुखेन सुखी नान्यः तस्मा न्नसुहृदो मम ॥ 41
एक एवाहमायात एक एवाहमास्थितः ।
एक एव गमिष्यामि देहान्तरमपि ध्रुवम् ॥ 42
यज्जीवामि चिरं कालं यज्जीवामि चमध्यमम् ।
यज्जीवामि कृशं चेदं मम नान्यस्य तत्समम् ॥ 43
इदमन्यैः पुरा भुक्तं भुज्यते च मया धुना ।
पुनर प्येतदेवान्यै र्मदपायेऽपि भोक्ष्यते ॥ 44
नैवास्पदं ममैवेदं धनमैश्वर्यमेववा ।
एते भृत्या इमे दारा एते पुत्रा इमे प्रियाः ॥ 45
एते स्वार्थं प्रवर्तन्ते नैकेतु निहितं मम ।
बाधते मामियं व्याधि र्बाधते मामियं जरा ॥ 46

सन्तापो मे परश्चेति ममैवेयं च वेदना ।
पूर्वे संवत्सरे दृष्ट मस्मिन्पश्यामि वत्सरे ॥ 47

तत्र पूर्वं कृतं कार्य मत्र कर्तव्यतां गतम् ।
अतीते दिवसे भुक्तमन्नमद्यापि भुज्यते ॥ 48

तथैव क्रियते कर्म तथैवाद्यापि सुप्यते ।
कुर्वन्ति पशवश्चैव पक्षिणो जन्तवस्तथा ॥ 49

मम तेषांच पश्यामि नविशेषं कदाचन ।
स्वस्यां जातौ प्रमोदन्ते विशेषेणापि जन्तवः ॥ 50

तस्माज्जन्मशुभं वा स्या दशुभं वा समं तु तत् ।
तस्माज्जाते न विश्वासो ममास्ति निधनेषु च ॥ 51

न विद्यासु न रूपेषु न मित्रेषु न बन्धुषु ।
मदायत्तं न जानामि मद्विधेयं नचापरम् ॥ 52

मामेकमेव पश्यामि मग्नं संसार सागरे ।
अध्वगस्य यथा मार्गे मित्रमन्नं धनं गृहम् ॥ 53

एवमेवास्य पश्यामि जातां मे जीवितामिमाम् ।
शकुनिः कोटरं यद्व दातिष्ठति जहातिच ॥ 54

एवमेव शरीरेऽस्मिन् न विश्वास्या मम स्थितिः ।
कुतोऽहमागतः[1] पूर्वं क गमिष्यामि वा पुनः ॥ 55

कियद्वा विहराम्यत्र न जाने सर्वमीदृशम् ।
आक्रान्तमपरोक्षं मे सर्वं विफल मेवच ॥ 56

अनागतं तथा सर्व मन्तराले किमस्ति मे ।
तस्माच्छरणमिच्छामि किंचि देकान्तिसंहितम् ॥ 57

अन्यथा मम संहरे[सा?] भयं वा न निवर्तते ।
इन्द्रियाणामवैकल्यं विवेकं मनसस्तथा ॥ 58

---

१. क. मङ्गतः ।

अ[न?]स्मिन् जन्मन्यवासं मे दिष्ट्या पूर्वकृतैः शुभैः ।
अस्मिन् जन्मनि यत्नेन [तत्तेन?] कर्तव्यं कुशलं मया ॥ 59
येन मे संपदां पुष्टिर्भवे दुत्तरजन्मनि ।
श्रेयो मार्गं न पश्यामि क्रियमाणेषु कर्मसु ॥ 60
अनुवर्धी फलं तेषां सुदुःखं ज्ञाननाशनम् ।
कर्माण्येवतु दृश्यन्ते वेदशास्त्रागमेषु च ॥ 61
नच तैर्मानसं तापः सर्वकालेषु नश्यति ।
तस्मादालंबनं किंचित् कूटस्थ मनुपद्रवम् ॥ 62
एषितव्यं मया किंचि दर्थोह्यर्थान्वितो भवेत् ।
नचविष्णोः परं किंचित्पश्यामि पुरुषं स्थितम् ॥ 63
इतिहास पुराणेषु लोकवेदागमेषु च ।
तस्मा त्त्वामेव शरणं प्रपद्ये भक्तवत्सल ॥ 64
मनसा कर्मणा वाचा निरपेक्षो दृढव्रतः ।
न करोमिच कामेषु कदाचिदपि मानसम् ॥ 65
किं ममैकेन कामेन द्वाभ्यां वा सिद्धिमीप्सितम् ।
तस्मा त्फल मनाकांक्षत् प्रपद्ये शरणं हरिम् ॥ 66
एकान्तदृढया भक्त्या व्यवसायोऽत्र मे ध्रुवः ।
इत्येवं दर्शनं कुर्या देकान्ते शुभमानसः ॥ 67
वैष्णवं सिद्धिमन्विच्छन्न भ्यसेच्च समाहितः ।
प्रसन्ने मानसे तंच चिन्तयेत विचक्षणः ॥ 68
रागद्वेषपरीतेन विफलं तत्त्वदर्शनम् ।
प्राप्तेषु पुण्यदेशेषु परिव्राट्सु च योगिषु ॥ 69
प्राकृतानांच मर्त्यानां मनः किंचित्प्रसीदति ।
निद्रान्ते च विविक्ते च पण्डितानां विशेषतः ॥ 70

एवमादिषु कार्येषु स्वयमेव समाहितः ।
तत्त्वदर्शन मातिष्ठेन्नित्यं भागवतो बुधः ॥ 71
तेनास्य सङ्गता भक्ति नैकदाचित्तु हीयते ।
पीड्यते च न कामेन निर्वेदो नापिवा पुनः ॥ 72
भक्तियुक्तस्तु पुरुषो लोकतन्त्रा न्निवर्तते ।
नाति सज्येत भोगेषु त्वरते न कुतूहलात् ॥ 73
तदुर्लभमपि प्रेप्सु र्लब्धेन परितुष्यति ।
अप्रियस्य च संयोगे विप्रयोगे प्रियस्यच ॥ 74
विपाकं कर्मणां पश्य न्नानुशोचति किंचन ।
युक्तंनेद मिदं युक्त मित्यसौ नानुशोचति ॥ 75
प्रभुत्वं नाटनं किंचिदिति पश्यन्नुपेक्षते ।
न घोषयति कृत्यानि न करोति च संभ्रमम् ॥ 76
न कांक्षति यतः किंचि द्देवदेवस्य पूजनात् ।
यथारत्नेषु दारेषु कृत्ये[पुत्रे?] वा मन संस्थितिः ॥ 77
एवमेवास्य देवेशे भक्तियुक्तं मनो भवेत् ।
एवं भक्तौतु जातायां तत्त्वदर्शनपूर्वकः ॥ 78
यत्र यत्र स्थितो विद्वान् मुक्तसङ्गः परिव्रजेत् ।
एकएव पुनस्तत्र गच्छेद्भूमिं प्रदक्षिणम् ॥ 79
तीर्थानि च निषेवेत स्थानानि मम चा न्वहम् ।
मद्भक्तो मदनु ध्यायी मन्निष्ठो मत्परायणः ॥ 80
अन्त्यकालेच मां स्मृत्वा मम सायुज्य मश्नुते ॥ 81

ब्रह्मा

किमष्ट गुणमैश्वर्यं विष्णुभक्तो यदश्नुते ।
किमेतदधिगम्यापि देही प्रतिनिवर्तते ॥ 82
निवृत्तेरस्य कोभेदः सायुज्यं कीर्तितं भवेत् ॥ 83

परमः

अणुर्भवति रूपेण पुरुषो योऽवगच्छति ।
महान् भवतिरूपेण यावदिच्छति पूरुषः ॥ 84

लघुर्भवति कामेन शुष्कशल्मलि तूलवत् ।
सम्मतेनैव कालेन प्राप्नोति सकलां महीम् ॥ 85

आहारेषु विहारेषु प्रकामं वर्तते सदा ।
संकल्पेनैव भूतानि वशं नयति चात्मनः । 86

अभिप्रेतं शरीरंच स्वयमाविशति क्षणात् ।
एतदष्ट गुणं प्रोक्तमैश्वर्यं तव पद्मज ! ॥ 87

अनेनैवोपलब्धेन क्रीडन्ति बहवो जनाः ।
प्रभुर्भवति सर्वस्य न किंचित्प्रतिहन्यते ॥ 88

न तेषामपराधोऽस्ति निवृत्तिर्वापि जन्मनि ।
यथा मे विनिवर्तन्ते सर्वलोकेष्विमे नराः ॥ 89

यदि मां विस्मरन्त्येते सुखनिद्राविमोहिताः ।
ततः कालक्रमेणैषामुपघातो भविष्यति ॥ 90

मद्भक्तिरक्षणादेते सोपघाताः समंततः ।
प्रतिस्रोतं प्रवर्तन्ते पुनःसंसारवर्त्मनि ॥ 91

लभन्ते तत्र ते जन्मवंशे श्रेष्ठे महात्मनाम् ।
भजन्ते तत्र मामेव ते पुनः सिद्धिकाम्यया ॥ 92

ऐश्वर्येऽपि स्थितोयोगी यदि मामनुवर्तते ।
ततोमुक्तवदेवायं सर्वलोकेषु मोदते ॥ 93

सायुज्यं प्रतिपन्नास्ते तीव्रभक्तास्तपस्विनः ।
किंकरा ममते नित्या भवन्ति निरुपद्रवाः ॥ 94

नेषां भक्त्यपराधेन संसारः संभवेत्पुनः।
अन्यथा स्थितिरेवैषां मत्प्रसादेन शाश्वती॥ 95

निवृत्तास्तु विशिष्यन्ते सर्वेभ्यः पुरुषोत्तमाः।
संसार गोचरातीता निर्विशेषाः सदा मम॥ 96

नतेषां संभवो भूयः प्रमादोवास्ति कश्चन।
वेदान्तैरिदमेवोक्तं वैष्णवं परमं पदम्॥ 97

अपवर्गश्च मुक्तिश्च निर्वाणं चैव देहिनाम्।
एतदेव परासिद्धि र्गतीनां परमा गतिः॥ 98

अन्यास्तु गतयः सर्वाः सप्रमा[दा]ः पितामह।
पुंसां स्वभावभेदात्तु कस्यचित्किंचिदीप्सितम्॥ 99

तस्मादुभयमेवात्र पुंसां भवति संमतम्।
ऐश्वर्योऽपवर्गो वा विशेषेण पितामह!॥ 100

मद्गता भक्तिरेवेद मुभयं साधयिष्यति।
समाधेर्वर्तमानस्य विभागा द्गुणकारिकात्॥ 101

सत्वनिष्ठं यदा चित्तं केवलं कुरुते पुमान्।
तदाऽयं सर्वयत्नेन योगाङ्गानि निषेवते॥ 102

तेषु स्थित्वातु भजते मामेकाग्रेण चेतसा।
तमः क्षरति तेनास्य रजोऽपि च विनश्यति॥ 103

ततो जन्मभिरुत्कृष्टै रेषः पुष्टिं प्रपद्यते।
ततः क्रमेण यद्यस्य रजो लेशः [1]प्रवर्तते॥ 104

चित्तवृत्तौ तदैश्वर्यं समग्रमुपतिष्ठते।
यदातु सत्वमातिष्ठ[न्]न स्पृष्टो रजसा क्वचित्॥ 105

१. क. प्रपद्यते।

ततोऽस्य मोक्षमेव स्यादित्येषा त्रिविधा गतिः ।
तस्मात्तु गतिमन्विच्छन् मद्भक्तः सर्वदा भवेत् ॥ 106
भक्त्यां च वर्तमानायां भवत्येवेप्सिता गतिः ॥ 107

ब्रह्मा

केन दोषेण पुंसस्तु भक्तिः क्षरति मानसी ।
इह लोके परत्रापि तं ब्रूहि पुरुषोत्तम ! ॥ 108

परमः

निर्वेदः संशयोऽप्या[व्या?]धि र्मिथ्याज्ञानं प्रवर्तते ।
अग्नि[अन्य] भक्तस्य भोगस्य सन्निधानं प्रियागमः ॥ 109
विप्रलंभस्तु मायाभि र्दैवीभि रुपजायते ।
स्नेहपाशानुबन्धस्तु सुहृद्योगात्प्रवर्तते ॥ 110
कीर्तौ च श्रूयमाणायां हृदये जायते मदः ।
अन्तराया मिमां विद्या द्योगाभ्यासस्य वैष्णवः ॥ 111
एतेषु जायमानेषु तत्त्वदर्शन माचरेत् ।
तीव्रवेगं नकुर्वीत शरीरं नच पीडयेत् ॥ 112
विषयेभ्योऽपि यत्नेन निवर्तेत शनैः शनैः ।
अन्नपानप्रसङ्गे तु न कुतूहल माचरेत् ॥ 113
जघनेन्द्रियसङ्गेच हस्तचापल्य एवच ।
अपूर्व दर्शने चैव लोकपालाश्रयेषु च ॥ 114
मोघ चित्त प्रसङ्गेषु योगमिच्छन्नरो बुधः ।
एतेषु सन्निवृत्तेषु विषयेषु शनैः शनैः ॥ 115
भक्तिर्विवर्धते पुंसः स्वयमेव मदाश्रया ।
नच पूर्व मनास्वाद्य शक्यन्ते विषया नरैः ॥ 116

परित्यक्तुमशेषेण तस्मात्तानपि संश्रयेत्।
धर्मशास्त्राविरोधेन मार्गेण शिथिलस्पृहः॥ 117

तान् भुक्त्वा गुणवान् दोषान् (सर्वावस्थासु)...पण्डितः।
दुष्करा भङ्गुराश्चैते विषयाः शुद्धिवर्जिताः॥ 118

मूल्यनाशेन भोक्तव्या बह्वपायाश्च सर्वदा।
इति बुद्धिं समादाय विषयेभ्यो निवर्तयेत्॥ 119

तेभ्यो निवर्तमानस्य शुभं भवति मानसम्।
निवृत्ते रभ्युपायश्च शुद्धिरेव परा मता॥ 120

शुद्धावादीयमानायां बीभत्सा विषयान्प्रति।
जायते सर्वदा चित्ते तया संरक्ष्यते पुमान्॥ 121

आहारेषु च सर्वेषु शयनाच्छादनेषु च।
पुराणेषु निवासेषु सलिलेषु च सर्वदा॥ 122

शुद्धिमेतेषु यत्नेन पश्यन् भागवतो बुधः।
स्वयमेव न संसर्ग मशुचिष्वधिगच्छति॥ 123

अशुचीनामसंसर्गा च्चित्तमस्य प्रसीदति।
प्रसादे विषयाकांक्षा मन्दमस्य निवर्तते॥ 124

विषयेभ्यो निवृत्तस्तु मद्गतो भवति ध्रुवम्।
मद्गतो योगमभ्यस्ये दन्तरायैरधर्षितः॥ 125

पूर्वपापविनिर्मुक्तः प्राप्नोति परमां गतिम्।
इति ते गुह्यमाख्यातं मया सर्वं पितामह!॥ 126

एतच्छ्रुत्वा नरो नित्यं कृतकृत्यो भविष्यति॥ 127

इति श्री पाञ्चरात्रे परमसंहितायां
रहस्यं नाम
त्रिंशोऽध्यायः॥

---

श्रीः

# अथैकत्रिंशोऽध्यायः



परमः

एवमेतन्मया प्रोक्तं तत्र तत्र विशेषतः ।
नेदं ज्ञानं त्वयावाच्यं निःशेषेणाकृतात्मनः ॥ 1

अवैष्णवस्य जिज्ञासो र्दुर्मतेरभिमानतः ।
निर्णयः सर्वधा प्रोक्त स्तत्रतत्र विशेषतः ॥ 2

यस्तु मद्भक्त एव स्या देकान्तेन दृढव्रतः ।
कुलीनश्च विलीनश्च तस्मै ज्ञानमिदं तव[वद?] ॥ 3

यादृशाश्च महाभागा मुनयः संशितव्रताः ।
श्वेतद्वीपमनुप्राप्य सर्वदा मामुपासते ॥ 4

तेषां ज्ञानमिदं ज्ञेयं तत्र गत्वाऽचिरात्त्वया ।
मया वाच्यमिदं तेभ्य स्तद्ब्रूहि मम शासनात् ॥ 5

नचैते मामुपासीनाः प्रार्थयन्ति फलान्तरम् ।
स्वयमेवतु दास्यामि ज्ञानमेषां युगे युगे ॥ 6

अतस्त्वमभिगम्यैनमिदं ज्ञानमशेषतः ।
तेभ्यः कथय तत्त्वेन ममचेदिच्छसि प्रियम् ॥ 7

येच तद्वीपमायान्ति मत्प्रसादेन योगिनः ।
तेभ्यस्त एव दास्यन्ति ज्ञानमेतत्पितामह ! ॥ 8

मार्कण्डेयः

एवमस्त्विति तं ब्रह्मा देव देवम भाषत ।
बद्धाञ्जलिरधोदृष्टिः परिपूर्णेन तेजसा [चेतसा?] ॥ 9

भगवानपि गोविन्द स्तत्रैवान्तरधीयत ।
तद्दृष्ट्वा विस्मितस्तत्र बभूव कमलासनः ॥ 10
श्वेतद्वीपं ततो ब्रह्मा प्रपेदे हरिशासनात् ।
अथ संनिहितं दृष्ट्वा ब्रह्माणं सर्व एव ते ॥ 11
स्तुतिभिस्तोषयामासु विंस्मयेन समन्विताः ।
अथैनानब्रवीद्ब्रह्मा प्रसन्नेनान्तरात्मना ॥ 12
वाक्यं शृणुत भद्रं वः सिद्धाः परमवैष्णवाः ।
प्रसन्नो वः परो देवः पुण्डरीकनिभेक्षणः ॥ 13
ज्ञान मिच्छति दातुं वः स्वयमेव दयान्वितः ।
तेभ्यो गत्वा स्वयं ब्रूहि ज्ञानमित्यभिचोदितः ॥ 14
आगतोऽहं पुरस्ताद्व स्तद्युष्माकं वदाम्यहम् ।
इत्युक्त्वा ब्रह्मणा सिद्धाः सर्वेऽपि पुनरब्रुवन् ॥ 15
सनत्कुमारः सनकः सनन्दन सनातनः ।
एते शृण्वन्तु चत्वारः प्रज्ञामेधा विशेषतः ॥ 16
श्रोष्यामः पुनरेतेभ्यो वयं भूयो यथा सुखम् ।
योगाचार्या भवन्त्वेते त्वत्प्रसादात् पितामह ! ॥ 17
इति सिद्धैरनुज्ञाता श्चत्वारस्ते महर्षयः ।
ज्ञानहेतोर्मुदायुक्ता ब्रह्माणं पर्यवासयन् ॥ 18
सृष्टिसंहारसंयुक्तं मुक्तिसंहारसंयुतम् ।
तेभ्यो ज्ञानं ददौ सर्वं पञ्चरात्रेण सर्वशः ॥ 19
ततस्तस्यावसानेतु पूजितस्तैर्महर्षिभिः ।
स्वयंभूः पश्यतां तेषां तत्रैवान्तरधीयत ॥ 20

तेऽपि तद्ज्ञान मासाद्य योगिनः कृतबुद्धयः ।
ददुस्तेभ्योऽपि सिद्धेभ्य स्तज्ज्ञान मखिलं पुनः ॥ 21

येच तद्वीपमायान्ति वैष्णवाः संशितव्रताः ।
तेभ्योऽपि तत्प्रसादेन ज्ञानमन्येऽपि योगिनः ॥ 22

मया प्यनुग्रहा द्विष्णो र्द्वीपमासाद्य तं शुभम् ।
सनकस्यमुखात्प्राप्त मिदं तन्त्रं तु वैष्णवम् ॥ 23

भूयः सनत्कुमारं तं सिद्धानन्यांश्चवैष्णवान् ।
तैर्दृष्टेन च [दृष्ट्वा तद्दत्त?] मार्गेण निवृत्तोऽस्मीह देवल! ॥24

निवृत्तश्च यथोत्साहं स्थानेषु परमात्मनः ।
अब्रवीत् [अस्मिन्?]द्वीपे निवत्स्यामि बहून् संवत्सरा-
नहम् ॥ 25

गत्वा गत्वातु पश्यामि वैष्णवान् सुचिरायुषः ।
तेभ्यश्च वैष्णवानेव तदा श्रोष्यामि तद्गुणान् ॥ 26

कच्छपेन्द्र मकूपारश्रेष्ठं दीर्घतरायुषम् ।
जैगीषव्यं तथा मुख्यं प्रलयेष्वपि निर्व्यथम् ॥ 27

जामदग्न्यं तथा राम मत्रिमङ्गिरसं तथा ।
एतानन्यांश्च पश्यामि काले गत्वातु वैष्णवान् ॥ 28

तेऽपि तद्वीप मासाद्य मुनयः संशितव्रताः ।
तत्त्वज्ञान मवाप्यैवं बभूवुः सुसमाहिताः ॥ 29

एकान्तिनो मुदायुक्ता विष्णुभक्तिपरायणाः ।
श्रद्धया परयोपेता वासुदेवमुपासते ॥ 30

त्वम[त्वया]प्येव मिदं ज्ञानं लब्धं देवल वैष्णवम् ।
विधूय संशयान् सर्वा नेकान्ती वैष्णवो भव ॥ 31

नातःपरतरं किंचित् पुरुषस्य शुभोदयम् ।
एकान्तेन परं देवं पुरुषो यत्प्रपद्यते ॥ 32
नहि सर्वेषु लोकेषु सर्वकालेषु वा पुनः ।
वैष्णवेभ्यो विशिष्यन्ते पुरुषाः केचन क्वचित् ॥ 33
तेषां तु सफलं जन्म संसारेऽस्मि न्न संशयः ।
एकान्तेन लभन्ते [भजन्ते?] ये पुरुषाः पुरुषोत्तमम् ॥ 34
न हि तंप्रति [संप्रति?] पश्यामि सर्वदेशेषु देवल ! ।
यः कामेन विना भक्तो देवदेवे जनार्दने ॥ 35
न मृत्यु र्नैभयं तस्य न जन्मान्तर संक्रमः ।
यस्य नच्यवते भक्तिर्वैष्णवे चरणाम्बुजे ॥ 36
अतस्त्वं वेदशास्त्राणां सर्वेषां पारगोऽपि सन् ।
सत्पथे संशयापन्नविष्णुभक्तस्सदा भवेः ॥ 37
तत स्तेनैव कालेन प्रत्ययो हृदये दृढः ।
स्वयमेव विनश्यन्ते येन ते सर्वसंशयाः ॥ 38
अनुग्रहाश्च लभ्यन्ते तत्र तत्रैव देवल ! ।
व्यवसायश्च भक्तस्य न विनश्यति जातुचित् ॥ 39
आचार्या श्चापि लभ्यन्ते विना यत्नेन सर्वतः ।
येभ्यः सकलमाप्नोति ज्ञानं भक्तिसमन्वितम् ॥ 40
अनेन सुपथा यात्रां ये केचित् प्रस्थिता भुवि ।
मान्याः सर्वत्र जायन्ते कीर्तनीयाश्च देहिनः ॥ 41
देव दानव गन्धर्वा यक्षराक्षसपन्नगाः ।
विष्णुभक्तस्य कुर्वन्ति नाप्रियाणि कदाचन ॥ 42
भजन्ते ये नरा विष्णुं मनसा कर्मणा गिरा ।
न तेषां दुर्लभं किंचि दिह लोके परत्रच ॥ 43

स्थावरेभ्यो विशिष्यन्ते ज[ङ्गमाः स्वैर्गुणैस्सदा?]........
गुणैः ।
जङ्गमेभ्यस्तु पशवः पशुभ्यो मानुषाः पराः ॥ 44
वैष्णवास्तु मनुष्येभ्यो वैष्णवेभ्यो बहुश्रुताः ।
विद्वद्भ्यः साधितज्ञाना ज्ञानिभ्यः संयतेन्द्रियाः ॥ 45
संयतेभ्यः पराः सिद्धाः सिद्धेभ्योऽपि महर्षयः ।
महर्षिभ्यो गतैश्वर्या स्तेभ्योऽपिच मुमुक्षवः ॥ 46
इति कक्ष्याः समुद्दिष्टा श्चेतनाना मशेषतः ।
यासां ज्ञानादवाप्नोति वैष्णवं परमं पदम् ॥ 47
ईश्वरत्वंच देवानां ज्ञानित्वंच विपश्चिताम् ।
वैष्णवत्वंच मर्त्यानां नाप्यन्य तमसः [तपसः?]फलम् ॥ 48
उत्पत्तिमरणे पुंसां वैष्णवानां फलान्विते ।
इतरेषांतु मर्त्याना मुभयं तदनर्थकम् ॥ 49
तस्मात्त्वं देवल त्यक्त्वा सर्वमन्यद्विचेष्टितम् ।
भजस्व सर्वभावेन परमात्मान मच्युतम् ॥ 50
इत्येवं वैष्णवं तन्त्रं मया प्रोक्तं तवानघ ! ।
रहस्येनच संयुक्तं कर्मभेद समन्वितम् ॥ 51
नचैतं परमं ज्ञानं देवदेवमुखात् च्युतम् ।
अज्ञातमूलभक्ताय दातव्यं देवल त्वया ॥ 52
तिस्रो दीक्षाः कृता येन वैष्णवेन तपस्विना ।
स एव वैष्णवं ज्ञानमखिलं श्रोतु मर्हति ॥ 53
ये विज्ञान वतो [येतु जिज्ञासवो?] धीराः श्रोतुमिच्छन्ति देवल ! ।
नतेभ्यो गुण वद्भ्योऽपि देयं ज्ञान मिदं तव ॥ 54

सर्वेषामेव दानानां ज्ञानदानं विशिष्यते ।
नसंख्या फलसिद्धीनां ज्ञानस्यच विमर्पणात् ॥ 55

यथैव पात्रसंपद्भि ज्ञानदानं विशिष्यते ।
एवं पात्रस्य दोषेण दातुर्भवति किल्बिषम् ॥ 56

तस्मात्पात्रं परीक्ष्यैव दानव्यं ज्ञानमुत्तमम् ।
अश्रमेण महत्पुण्यं ज्ञानदानाद्यदिच्छति ॥ 57

इति संक्षेपतः प्रोक्तं हितार्थं नव देवल ! ।
पाञ्चरात्रं मया तन्त्रं सारमुद्धृत्य सर्वतः ॥ 58

एतद् ज्ञानं दृढं ग्राह्य मनुष्ठेयंच देवल ! ।
चिन्तनीयंच सर्वत्र तेन ते सिध्यतीप्सितम् ॥ 59

कच्चित् ज्ञानमिदं सर्वं धारितं देवल त्वया ।
कच्चित्ते संशया नष्टाः कच्चित्ते निश्चिता मतिः ॥ 60

एव मुक्तस्तदावाक्यं मार्कण्डेयेन देवलः ।
प्रणम्य शिरसा पादं वचनं चेदमब्रवीत् ॥ 61

देवलः

एतद् ज्ञानं मया लब्धं त्वत्प्रसादान्महामुने ।
कृतकृत्यो भविष्यामि नष्टंमे हृदयं तमः ॥ 62

छिन्नामे संशयास्सर्वे समुपात्तश्च निर्णयः ।
श्रद्धया सहिता भक्ति रद्यमे भवति ध्रुवम् ॥ 63

यथा ज्ञानमिदं लब्धं पावनानां सुपावनम् ।
एवमेव करिष्यामि स्थितोऽहं वचने तव ॥ 64

इत्येवं देवलः प्राप्य वैष्णवं ज्ञानमुत्तमम् ।
मार्कण्डेयं समामन्त्र्य निर्जगाम यथेप्सितम् ॥ 65

यइदं श्रुणुयात्तन्त्रं वैष्णवः शुद्धमानसः ।
तस्य पापानि नश्यन्ति जन्मान्तर कृतानिच ॥ 66

श्रुत्वा य इदं तन्त्रमुपास्ते पुरुषोत्तमम् ।
अचिरेणच कालेन तस्य देवः प्रसीदति ॥ 67

यः पठे दादरादेतत्तत्पाठयति वा नरः ।
तस्यापि पापं क्षरति विशेषा भक्तिरिष्यते ॥ 68

तस्मादनेन मार्गेण पूजयेन्मधुसूदनम् ।
ऐश्वर्यमपवर्गं वा निर्व्याजमधिगच्छति ॥ 69

इति श्रीपाञ्चरात्रे परमसंहितायां
उपसंहारो नाम
एकत्रिंशोऽध्यायः

THE

# PARAMA SAṀHITA

OF THE

# PĀÑCHARĀTRA

*Samhita I*

1. Dévala came to see the great sage Mārkaṇḍéya who was then sitting at ease in his hermitage beautiful with trees all round.

2. Having saluted him in the prescribed form, and, by him been welcomed with kindness, the learned Dévala began addressing his questions to Mārkaṇḍéya who had knowledge of the Supreme Truth.

3. O, Bhagavan! (the all knowing) I have learnt the Vedas with all the Aṅgas and Upāṅgas (auxiliary studies) in their elaboration; I have studied from masters the auxiliary sciences including *Vākōvākyam* (Logic).

4. After all this learning I am not able to discover, without besetting doubts, what indeed is the way which leads ultimately to Supreme Bliss.

5. Nor am I able to find, in any one of the *Āgamas*, the Supreme Good. Even after studying all these *Āgamas* my doubting only became the worse.

6. In this perplexity, O, Bhagavan! teach me that which would remove my doubts. I see no one who is master of the ways which lead to the ultimate good, other than you.

7. Thus addressed by Dévala, the Great Saint Mārkaṇḍéya, answered, with a smile, Dévala's question as follows:—

8. I have obtained long life, my memory has never left me, many cycles of destruction and creation have been seen by me as also many ages of Manu.

9. I have seen many teachers, and the Sāstras, I have learnt a thousand times over. In spite of it all, I have not been able to obtain from them even a little of what is the only ultimate Good.

10. Therefore, feeling sorely pained, I went to Sālagrāma, with a burning heart, and devoted myself to worshipping Vishnu there.

11. For a thousand and eight years, I conducted the worship in the manner that seemed best to me, but, with deep interest and devotion.

12. Then was seen by me the Supreme God with eyes beautiful as lotus flowers, of dark blue colour and a gracious countenance.

13. Prostrated by me in salutation and belauded in hymns of praise, that King of Gods spoke to me with great kindness, in the following words.

14. Bhagavān:- 'O, Mārkanḍéya' by force of the worship which you offered through such a long period, with such great devotion and in the manner prescribed, I am here before you.

15. Ask what boon you wish to have; whether it be length of life, knowledge, wealth, or whatever else you may desire. O the disciplined one, all prosperity to you.

16. Having been thus addressed by God, I asked, with hands raised in adoration, that knowledge pure, clear and free from doubt may be mine.

17-20. When I addressed this request, the God of Gods replied smiling, 'if your object is to gain "Supreme knowledge" go hence to Śvétadvīpa situate amidst the Ocean of Milk; the place of attainment to great Yogis (Saints). There, serving in due form the Wise Ones of Great Knowledge, obtain from them the knowledge you desire which is capable of procuring for you the Heaven of the Gods, and the still higher freedom. You shall have, O Disciplined one! unobstructed freedom,

to move wherever you please, as also long life, by my Grace'. The great God having told me this disappeared then and there from my view.

21. Thereafter having been struck with wonder, O Dévala! I started towards Śvétadvīpa, and kept travelling for a long time without anybody obstructing me on the way.

22–24. Crossing mountains and oceans I reached that island ultimately. There I found Saints all light, each with four arms bearing marks of the Disc, the Conch, and the Lotus. Being all devoted to Purushōttama, contemplating Him alone (as the sole refuge), these *Ekāntis* (people with only one ultimate end to attain) were happy, unequalled, without wives, with their minds intuned, and always intent on contemplating the Supreme.

25. Seeing them and making my obeisance, in wonder, to all of them as befitted them, I then went to the hermitage of the Saint Sanaka.

26–29 There having done him reverence I addressed him in the following words: 'Please understand I am Mārkaṇḍēya coming from another dvīpa (division of land), O wise One! who has attained to the highest knowledge, enlighten me who has come all the way for the sake of knowledge'. Thus addressed by me the highly learned and great minded Sanaka, making reverence to the Supreme God, said in reply "Be it so". The treatise which was then taught me by Sanaka, well pleased with my devotion, removed the doubts and darkness enveloping my soul. Effort arose (*jātaḥ*) in me and my mind became clear.

30. Continued vexation of mind ceased, and attachment to anything became subdued. 'O, Dévala' ! This Treatise was obtained by me in the Manvantara (the age of Manu) before the present one.

31. Through this long interval of time no one was taught this work as a whole because of its vastness.

32–33. Having acquired this in parts, many ascetics have gone satisfied; for that reason therefore this work is

known in the world in various forms, without giving a satisfactory meaning, missing the essence of its teaching and even contradicting one another. The *Pāncharātra* taught in this treatise is spoken of as the Supreme "*Yōga-tantra*".

34. O austere in devotion, because it is the work of the *Parama Purusha* Himself. That it conveys the truth, is not open to counter argument, and is of immense good to the world.

35. It is acceptable to the devoted, the more so to the devotees of Vishnu; among the Agamas this is treated as alone authoritative.

36–37. It has continued intact through the various ages of creation by command of the God of Gods. The wise ones who know this work completely, will have no doubt of any kind in the pursuit of the path of holy living. Their life would not be lived in vain; there is nothing that they could not attain to.

38–39. They will have no suffering, no anger, and no anguish of mind. The fruit of deeds, the illumination resulting from knowledge and the co-operation of these two is expounded in this treatise. The five qualities of the primary elements are said to be rights to the embodied soul.

40–43. This is called *pāncharātra* either because of the union, or because of the separation, of these five Bhūtas (primary elements), the Tanmātras (subtle elements), Ahankāram (individuation), Buddhi (thought), Avyakta (the formless), these five have been described as the five *rātra* (gifts) of Purusha, and hence they are called *pāncharātra*. If this work is fully and carefully mastered by one, to him the benefit that would accrue from the study of any other Sāstra is little. If you have doubts to clear in respect of your pursuit of the holy way of life, have this work expounded. To those who remain in doubt even after consulting other treatises bearing on the subject, this treatise is recommended the best (by the Wise).

44–55. Seeing you in that condition of doubt, the feeling of surprise arises in me; therefore listen attentively to the

*pāncharātra* as heard by me of old from Sanaka through the grace of the God of Gods. This treatise contains one lac of chapters, treating of evolution and involution: teaching the attainment of perfection as the result of various deeds. O Dévala; this work however it is not possible to hear in full, as I myself could learn it only after gaining length of life; I shall therefore teach you the work, taking from it only the essence of it, beginning with the introduction and leading up to the account of Vaikuṇṭha (Supreme abode of Bliss). This Universe was all darkness, ununderstandable, without form, incapable of being described or even conceived, as if all was asleep all round. In such darkness the Supreme One assuming the sleep of *Yōga* (contemplation), remained long in that condition; the self-luminous One then gave thought to bringing about creation. Then again taking the form of a Yōgin, the Lord first created the seed of the Universe in the form of a white lotus, with a thousand petals all round the circle of pistils (késara) surrounding the pericap (karṇikā), springing from out of His navel. In this lotus He created Vidhāta (the creator) with four faces, the source of all art and learning, with soul sanctified by meditation on the Supreme, the lord of all creation. That Lord, having created the five elements first, then created all the worlds, including the moving and the unmoving, by means of the elements separately and jointly. Having in this manner created all the worlds, Brahma (Pitāmaha) the great Yōgi, in unwavering contemplation began concentrating (his breath). In that condition there arose in his mind a doubting enquiry regarding all that was around him.

56. Springing from out of that doubt there came a sudden flash upon his mind. He then saw the God of Gods, lying in his couch in the Ocean of Milk (Kshīrasāgara).

57. He, the lotus-eyed, was in bed on the body of Ananta (the great snake Śésha), with four arms bearing the Conch, the Disc, the Club and the Lotus.

58. He was dark of hue, wearing cloth of golden colour; Śrī, His consort was sitting at His feet. He was of pleasing colour, and bore on His chest the mole, Śrivatsa, and the Jewel *Kaustubha*.

59. Vainatéya (the bird-Garuḍa) was seated on His side constantly serving Him. Having seen the Excellent Purusha, Brahma.

60–62. *Not translated being unintelligible owing to lapse of words which looks like a break in the MSS.*

*Paramah*

63. To all embodied beings activities are two; knowledge (gñānam), and action (kriyā). Emancipation results from the active development of *Gñāna*, and life (*Samsṛti*) results from the active development of *Karma.*

64. Action which is limited gives rise to result which is also measurable, while gñāna which cannot be measured produces result which has no limit.

*Brahma*

65. To people involved in life and looking to the satisfaction of the senses, how is the attainment of knowledge (*vigñānam*), even in a limited measure, possible, though they be *Yōgins.*

*Paramah*

66. The knowledge attained by worldly men does not avail to bring them emancipation at all; it only serves them to understand the means by which to get rid of the bonds of action.

67. When thus the bonds of *Karma*, composed of action and means thereto, are destroyed, one becomes *ipso facto* possessed of the highest knowledge, and for ever remains as such.

*Brahma*

68. In what manner are the emancipated, who are your bodies to be distinguished from the embodied. This Secret of Secrets, may it please You to tell me O, Lord'.

*Paramah*

69. They become Myself alone; there is no difference whatsoever between the two. In whatever manner I divert myself, the emancipated do so in the same manner likewise.

*Brahma*

70. What is it that brings the embodied souls into bondage ? That, tell me, O, Purushōttama. In what manner do the means of bondage bind man.

*Paramah*

71. O Brahman, the three *guṇas* (qualities), which act both in conjunction and separately, make thrice two kinds of sleep. By these men get bound.

72. *Sattva* sleep is happy. The sleep arising from *Rajas* promotes action; from *Tamas* comes confusion and bewilderment. These are considered the three forms of bondage.

*Brahma*

73. These three qualities are found in conjunction in men; how can these be separated by those *Yōgins* who wish to achieve emancipation.

*Paramah*

74. These are not qualities of man as such: but are the result of attachment to objects of the senses. They spring from them and cease with them.

*Brahma*

75. O, the Best of Heavenly Ones ! what is it that you called *vishaya* to men, attachment to which brings into existence the *guṇas,* and detachment destroys them ?

*Paramah*

76. The embodied ones existing in the material world have the three qualities (*guṇas*) in their nature (*prakṛti*). They are bound so long as they are associated with her (nature); when that association ceases they become free.

77. Man knows always that the three *guṇas* (qualities) exist in *Prakṛti* (material cause). It is *Prakṛti* that always creates in him various kinds of sleep (forgetfulness).

78. Man enjoys this sleep, as he would a woman dear to him and in the exercise of her own right. In consequence he forgets his own nature. This is regarded as the nature of the association between man and his material nature (*Prakṛti*).

*Brahma*

79. By what cause is brought about his association with *Prakṛti*. This is regarded a great seciet, O Great One, do teach me this.

*Paramaḥ*

80. *Māya* is indeed the cause of this, according to my original disposition. Man however is overcome by *Māya* as a result of *Karma* (his own action).

81. To the *Māya* created by me there is no cessation in this world except as the result of my Grace. There is no need to enquire about it.

82. As long as this *Māya* is not removed by my Grace, so long is worldly existence to man. When *Māya* ceases emancipation follows.

*Brahma*

83. You are perfection, O God, what can compel you to show Grace. I do not understand the compelling cause, do expound it to me please.

*Paramaḥ*

84. Faith, Devotion and Meditation which people show towards me, result in good; that good may be taken to be my Grace.

85. The devotion shown to me, though not as prescribed in the *S'āstrās* and the *Āgamas*, brings only good, even to men who may be uncultured. Of this there is no doubt.

86. Therefore to man in worldly life nothing but my Grace can do the ultimate Good. No other way need be searched for for the attainment of this.

*In the Parama Samhita of the Pāncharātra, Chapter I entitled "Questions and Answers." (Praśna–Prativachanam).*

## CHAPTER II

*Brahma*

1. O, Bhagavan! the Lord God of Gods, Lord of the lotus eyes! All religious observances have You alone, the Lord of all creation, for their objective, I ween

2. Whoever should wish to devote himself to your worship, according to prescribed forms, please tell me how they should prosecute the worship. In what place and in what manner should they please you?

*Paramah*

3. Whatever is my sport be it in creation or destruction, that you contemplate in due order, and with devotion.

4. The primary origin of all created things (*Bhavas*) is *Prakṛti*, otherwise called *Dravya*; the same thing is also described as *Avyākṛita* (unchanged) and *Avidyā* (unknown, non-knowledge). That alone is described as *Vyaktam* also.

5–6. *Avyakta*, *Buddhi*, *Ahankāra*, *Bhūta* and *Mātra*, these five, the eleven *Indriyas*, the five *Mahābhūtas* (material elements), *Kshètra* (abode) in two forms, material and etherial, and *Kshètragña* who is the Supreme One. That these are the *Tattvas* (the primary elements) you have been already told, Holy One!

7. All created things, are associated with three *guṇas* found in *Prakṛti*. These fall into three classes, the superior, the middle and the inferior.

8. Where *Sattva* (goodness) dominates, it is superior; where a desire (*Rajas*) predominates, it is middle, and where *Tamas* (darkness or ignorance) prevails, it is inferior. Their action also is quite similar.

9. The service that pleases me best is that which is full of goodness (*Sattva*). Service rendered with desire (*Rajas*) results in bringing enjoyment. Service offered in ignorance (*Tamas*) results in delusive attachment.

10. Therefore one who wishes to please me by service, should render service in the *Sāttvic* (disinterested) form, having destroyed in due order every wish arising from desire and darkness or ignorance (*Rajas* and *Tamas*).

11. Adopting the course of destruction (*Samhāra*, involution) proceed to destroy all desire and darkness. Adopting the course of creation, evolutionised recreation must be brought about.

12. In this process of evolution and involution of all created things in one order, it must be understood that the processes reach up to me. Otherwise there will be no fulfilment.

*Brahma*

13. Wherefrom is the birth for things and where do they reach their end according to common acceptance. Have both of these processes an end, please tell me.

*Paramah*

14. *Prakṛti* (Nature) gives birth to things. *Prakṛti* it is that which swallows them again. With Brahma's coming into existence is creation, his end brings destruction.

15. The day and the night alike of Brahma are of the measure of one thousand *Yugas*. By that measure Brahma's life is a hundred years.

16. O *Pitāmaha* (Brahman)! In this manner, by the measure of Brahma's life the cycle of creation and destruction keeps going on by My direction.

*Brahma*

17. What is the form of that *Prakṛti,* and in what manner does she bring things into existence? What is the connection between her and the Supreme *Purusha* ?

*Paramah*

18. The form of *Prakṛti* is described as unanimated, immeasurable, eternal, always changing; as possessed of the three qualities, and as providing body for those who act (*Karmiṇaḥ*).

19. The relation between *Purusha* and *Prakṛti* is universal pervasion (*vyāpti*), as He, in very truth, is without beginning and without end.

20. As sound pervades all this *ākāśa* (space), so, in the same manner the Supreme Soul (*Paramātmā*) pervades all *Prakṛti*.

21. As viscidity in milk, as taste in water, so in the process of transformation these two attain to the position the pervaded and the pervader.

22. In this condition that which is the pervading agent, is the Superior *Pumān* or *Vishayī*; while the uniormed *Prakṛti* (*Avyākṛtam*, ) becomes the object of pervasion, that is, *Vishaya* and thus inferior.

23. Since *Sat* and *Asat* cannot be separated one from the other and seen apart, in the same manner the pervader cannot be regarded as distinct from the pervaded. Hence *Purusha* is regarded as the pervader of all.

24. In this, *avyākṛtam* (*Prakṛti*) is *Achit* (inanimate); *Chit* (the active principle) is held to be superior. The two combined is different from either, and exist as if they were one.

*Brahma*

25. How did all that we see–the three worlds–arise from this? Of what kind are men who are placed in earthly life (*Samsāra*).

*Paramaḥ*

26. By direction of the Supreme *Purusha* alone, *Prakṛti* (nature) keeps constantly creating all living creatures and destroys them in the end.

27. *Prakṛti* being an inactive principle does not create otherwise (than by my direction). Therefore the Supreme *Purusha* does the work of both creation and destruction.

28. O, Brahman! hear attentively first of all the story of this present creation; after this I shall give you an account of existence and destruction.

29. The powers characteristic of the Supreme Soul are said to be five. By means of these, it is that the Supreme God remains in the highest Heaven.

30. These five are (1) *Paramèshṭi*, (2) *Pumān*, (3) *Viśva*, (4) *Nivṛtti*, (5) *Sarva*. These are said to be His Five powers (*S'aktis*) and are named *Panchōpanishad* (five secrets).

31. The supreme Soul, Lord of the Universe, in full possession of these five powers, enjoys knowledge in five ways by the accession of the five organs of sense.

32–33. In enjoying sound (*S'abda* or *Ākāsa*) He is *Paramèshṭi;* in case of touch He is *Purusha;* in case of light He is *Viśvātma;* in the case of taste (*rasa*) *Nivṛtti;* in the case of smell *Sarvātma. Paraḥ Purusha* is the subject in each case. These are regarded as *Panchātma* and are described as of etherial form (*Sūkshamarūpa*);

34. Incapable of realization in worldly life, comprehensible by concentration (*Yōga*), and eternal, this etherial form (*Sūkshma S'arīra*) is said to be the means of emancipation (*Mukti*).

35. This etherial form (*Sūkshma*) in combination with *Prakṛti* assumes fifteen forms in order. These fifteen fall into three groups of five each and become the source of the three *Guṇas* (qualities).

36. *Jyèshṭa, Vidyā, Kānti, S'ānti, S'raddhā,* these five uncontaminated (*nirmalā*) powers form the source of *Sattva* (goodness).

37. *Vāgiśvari, Kṛiyā, Kīrtih, Lakshmī, Srishṭi,* these five, being slightly contaminated, are regarded as the source of *Rajas,* the active principle.

38. *Mohinî, Avidyā Tamōvati, Mṛtyuḥ, Māya* and *Malinā* these, being fully contaminated, constitute the source of *Tamas* (ignorance, darkness).

39. Among these understand *Sattva* as that which gives light, *Rajas* as that which produces activity while *Tamas* has to be understood as that which hides from view. These are the characteristics of the *Guṇas* (qualities).

40. It is by these *Gūṇas* alone that the whole creation, animate and inanimate, assumes surprisingly varied forms by process of combination and separation.

41–42. *Buddhi* formed of the three *guṇas* falls into eight classes according to variation in qualities. From *Sattva* springs that which constitutes happiness, from *Rajas* what constitutes sorrow; and from *Tamas* what constitutes delusion

